

प्राच्यविद्यासंशोधनालय-प्रकाशनम्—११७

महीशूरपुरीय प्राच्यविद्या लघुग्रन्थमाला-२

# THE MYSORE ORIENTAL SUPPLEMENT SERIES-2



THE MYSORE ORIENTAL RESEARCH INSTITUTE PUBLICATION No. 117
1969

# THE MYSORE ORIENTAL SUPPLEMENT SERIES

EDITED
WITH THE KIND CO-OPERATION OF VARIOUS SCHOLARS



BY

Dr. G. MARULASIDDAIAH, M.A., Ph.D.
*Professor and Head of the Department of P-G Studies and Research in Sanskrit, University of Mysore and Director, Oriental Research Institute Mysore*



ORIENTAL RESEARCH INSTITUTE, MYSORE




श्रीमदप्पयदीक्षिताचार्यविरचितं

स्वोपज्ञव्याख्यासहितं

# पञ्चदशाङ्गयोगप्रकरणम्

# PAÑCADAŚĀṄGAYOGAPRAKARAṆAM

OF

## APPAYADĪKṢITĀCĀRYA

*(with his own Commentary)*

CRITICALLY EDITED WITH INTRODUCTION AND NOTES

*By*

VIDVAN N. S. VENKATANATHACHARYA

*Senior Research Assistant, Oriental Research Institute, Mysore*

THE ORIENTAL RESEARCH INSTITUTE

UNIVERSITY OF MYSORE

MYSORE

1969

# FOREWORD

THE AUTHOR OF THIS work is Appayyadīkṣita related to the great Appayyadīkṣita of the 17th century. Hailing from Tirunelveli in Kerala, he contributed to Sanskrit Yoga cult in the 19th century. He is a disciple of Sundareśatātācārya, as it is clear from the colophon :

"इति श्री सुन्दरेश्वरताताचार्यशिष्येण श्रीमदप्पय-
दीक्षितेन्द्रान्वयजेन अप्पयदीक्षिताचार्येण विरचिते ...."

In Tamil and Malayalam we have many independent works of his. Appayācārya or Appayaśivācārya or Appayadīkṣita are the various names we find in his *Parāśaradīpikā*, *Ādhyātmadarpaṇa*, *Varāhamañjūṣā*, etc.

The special contribution of our author to Indian Philosophy is his special introduction to Anubhavādvaita, based on the Sāṅkhya and Yoga principles. To quote a few instances, he is upholding the *vivartavāda* (transmigration) in preference to the *pariṇāmavāda* (transformation) in accounting for realization of parabrahma *vs* prapañca. He is a stranger to the philosophical controversies and speculations made much of by Śaivites and Vaiṣṇavites. However not related to the philosophy, he upholds *trimūrtisāmyavāda*. The terms like *parokṣādvaita* and *aparokṣādvaita* are old wine in new bottles. A cursory reference to these lines in his works will go to prove this.

"मूलाज्ञानविनाशं विना प्रपञ्चप्रतीतिराहित्यलक्षणोपमर्दासंभवात्।" (पञ्चदशाङ्गयोगप्रकरणे); "परिणामात्" (अनुभूतिमीमांसा सूत्रभाष्यम्); (हरिहरब्रह्मसामरस्यम्); "एवं स्वरूपानुसन्धानेन भ्रमरकीटन्यायेन मुक्तो भवति" (अनुभूतिमीमांसा ४.१.१४); जीवब्रह्मणोः परापरयोः अभेद एव (अनुभूतिमीमांसा ३.४.८); निर्गुणाद्वैतापरोक्षानुभववादिभिः अस्मदीयैः (अनुभूतिमीमांसा ३.३.२५).

His inclination is primarily towards Yoga than Philosophy. Even in *Tejobindūpaniṣat*, the same is emphasised. The famous *aparokṣānubhūti* (immediate realization of the Brahman) according to Ādiśaṅkara is agreeing with our author depending upon the fifteen yogic aspects.

Shri N. S. Venkatanathacharya, Senior Research Assistant in the Oriental Research Institute, Mysore, has taken commendable pains in editing this booklet for our supplement portion, which will be a part of the Oriental Research Institute publications. As a tiny treatise for a good introduction to *Aṣṭāṅgayoga*, I commend this to our esteemed readers as an important and illustrative book on the Indian Yoga.

G. MARULASIDDAIAH
*Professor & Head of the Department of Post-graduate Studies & Research in Sanskrit & Director*

*Oriental Research Institute*
*University of Mysore*

## प्रस्तावना

ॐ

"क्रियावानेषः ब्रह्मविदां वरिष्ठः।"

"इह चेदवेदीत् अथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः।
भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति॥"

"इहैव तैर्जितः सर्गः येषां साम्ये स्थितं मनः।
निर्दोषं हि समं ब्रह्म तस्मात् ब्रह्मणि ते स्थिताः॥"

इत्यादिश्रुतिस्मृतिभिः यः आनुभविकोऽर्थः मानवेषु कर्मज्ञानभक्तियोगनिष्ठाः निष्ठापयन् उद्घोषितः, तमेव परमार्थं स्वानुभवेन संप्रज्ञातवन्तः परिपूर्णपरब्रह्मानुभवास्वादपरिपूरितस्वान्ताः सरळोदारहृदयाः श्रीशङ्करभगवत्पादाः सदृष्टान्तमेवं समदिशन्। यथा —

"न गच्छति विना पानं व्याधिरौषधशब्दतः।
विनाऽपरोक्षानुभवं ब्रह्मशब्दैर्न मुच्यते॥" इति,

"एकं वेदान्तविज्ञानं स्वानुभूत्या प्रकाशते॥" इति च॥

अमुमेव राजमार्गं आचार्याणामाशयमनुसृत्य योगमार्गावलम्बनेन स्वानुभवगोचरतां नीत्वा उररीकृतवन्तः तदास्वादनवनवोन्मेषशालिनः, जन्मना तिरुनल्वेलीदेशमलङ्कृतवन्तः सुप्रसिद्धाप्पयदीक्षितेन्द्रान्वयजाः अप्पयशिवाचार्यापरनाधेयाः श्रीमदप्पयदीक्षिताचार्या अपीमे, केवलसिद्धान्तमार्गावलम्बनेनापद्यमानाः, प्रतिव्यक्ति मतिभेदेन भिन्नभिन्नतया भासमानयुक्त्यनुसारेण उपपाद्यमानविकृततर वाक्यार्थवैखरीपरम्पराः अनुभवपर्यन्तागोचराः सर्वा अपि मनसि संविभाव्य, अध्यात्मशास्त्रमूलभूतयोगमार्गानुगं भगवत्पादहृदयङ्गमं तदीयमेव स्वकीयं पन्थानमिमं 'अपरोक्षाद्वैत–अनुभवाद्वैता'दिसंज्ञाभिः उद्ङ्कयन्तः बहून् ग्रन्थान् विरचयामासुः॥ अतएवेमे शाङ्कराणां सैद्धान्तिकं अध्यासवादं, जगन्मिथ्यात्ववादं, ज्ञेयात्मवादं, परोक्षाद्वैतवादं, एवमन्यदन्यच्च खण्डयन्तः, परिणामं, जगत्सत्यत्वं, ब्रह्मणो ध्येयत्वं, अनुभवाद्वैतादिकं च स्वकीयानुभूतिमीमांसायां साडम्बरं स्थापयन्ति।

यद्यपि परिचितशब्दशक्तिस्वाभाव्यात् यथावद्भावचित्रणाशक्तेः साधनवैकल्यात् मानुषमतिसहजप्रमादात् अवस्थाविशेषानुभूतार्थस्मृतिवैकल्यात् उपपादनवैखरीसञ्जातसंभ्रमाविनाभूतस्खालित्याद्वा तत्रतत्र कतिचनार्थाः त्यक्ताः अयथावदुपपादिता अपि स्युः। अथापि नेमं प्रायशोऽपरिहार्यं दोषमेव परिगणय्य गुणजालं महान्तं दूरीकर्तुं प्रभवामः, किन्तु "एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः।" इत्येव भावयामः। यतः एते प्रतिपदं स्वत एव शब्दजालमहारण्यस्य बुद्धिभ्रमणकारणतां मन्वानाः,

"अधीत्य चतुरो वेदान् सर्वशास्त्राण्यनेकशः ।
ब्रह्मतत्त्वं न जानाति दर्वी पाकरसं यथा ॥"

"अनेकशतसंख्याभिः तर्कव्याकरणादिभिः ।
पतिताः शास्त्रजालेषु प्रज्ञया ते विमोहिताः॥"

"ज्ञाननिष्ठो विरक्तोऽपि धर्मज्ञो विजितेन्द्रियः ।
विना योगेन देवोऽपि न मुक्तिं लभते क्वचित् ॥"

"मथित्वा चतुरो वेदान् सर्वशात्राण्यथैव च ।
सारन्तु योगिभिः पीतं तक्रं पिबति पण्डितः ॥"

इतीमान् सर्वसारोपनिषद्योगबीजज्ञानसङ्कलिनीतन्त्रेषु सिद्धान्तितान् सत्यार्थान् सदा मनसि संनिधायैव वक्तव्यविषयान् तत्त्वनिष्ठया निष्ठुरमेवोपपादयन्ति इति अदसीयग्रन्थपर्यवेक्षकाणां अपरोक्षमेव ॥

एतदीयग्रन्थेषु च —

अष्टोत्तरशतोपनिषद्भाष्यं, ब्रह्मसूत्रभाष्यं, भगवद्गीताभाष्यं, श्रीमद्भागवतैकादश-स्कन्धव्याख्या, पराशरदीपिका च इत्यादयः प्राचीनग्रन्थव्याख्यारूपाः ।

अनुभूतिमीमांसाभाष्यादयः स्वतन्त्रसूत्रभाष्यरूपाः ।

षोडशमञ्जरी, पञ्चदशाङ्गयोगप्रकरणं, समाधिरत्नमञ्जूषा चेत्यादयः सस्वोपज्ञव्याख्याः प्रकरणग्रन्थाः ।

कैवल्यसाधनं, गुरुशिष्यसंवादः, तत्त्वसङ्ग्रहः, निष्ठानुभूतिः, पञ्चदीपिका, मन्त्रानुष्ठान-क्रमः, योगसारस्वतम्, स्वानुभूतिः, हरिहरब्रह्मसामरस्यं चेत्यादयः प्रकरणादिरूपाः ।

षट्त्रिंशद्भागविभक्ता वेदान्तव्यवहारमाला, बहुप्रकरणविभक्तं वेदान्तयुद्धप्रकरणं चेत्यादयः वादविवादनिर्णयात्मकाः ।

उपदेशतत्त्वं, द्राविडसूत्रं, जीवचिन्तामणिः पञ्चीकरणप्रक्रिया, भगवद्गीतानुवादः मुक्तिकामधेनुः, मुक्तिरत्नं, योगदर्पणं, वेदान्तप्रकरणं, शिवप्रकाशपद्धतिश्चेत्यादयः केरळ-द्राविडभाषामयाः ग्रन्थाः ।

एवं बहुप्रकाराः ग्रन्थाः अदसीयाः समुपलभ्यन्ते । सम्यक् परिशील्यमाने तु इतोऽप्यन्ये अनेके ग्रन्थाः एतदीयाः समुपलभ्येरन् इति भावयामः ॥

एतदीयग्रन्थानां अवलोकने परिशीलने आस्वादने वा कुतूहलिनां सहृदयानां कर-कमलयोः प्रथमतः 'अद्वयतारकोपनिषद्भाष्यं' उपहृतवन्तो वयं, इदानीं द्वितीयतया 'पञ्चदशाङ्गयोगप्रकरणं' उपहरामः ।

यद्यपि योगप्रक्रियाः प्रायशः यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपैः प्रसिद्धैरष्टभिरेवाङ्गैः सर्वत्रोपपादिताः । क्वचित्तु हठयोगः यमनियमावाद्यौ परित्यज्य आसनादिभिः षड्भिरेवाङ्गैः पूर्णतया समर्थ्यते । पञ्चदशाङ्गानि तु न तथा प्रसिद्धानि । तानि च— यमनियमौ, तदुपाङ्गतया त्यागमौनदेशकालाः, आसनं, तदुपाङ्गतया मूलबन्धदेह-साम्यदृक्स्थितयः, प्राणायामप्रत्याहारधारणध्यानसमाधयश्चेति । अत्र अधिकतयोक्तादङ्ग-

सप्तकादतिरिक्तानामष्टाङ्गानां योगशास्त्रोक्ताङ्गसमानसंज्ञकानामपि लक्षणं परं भिद्यत एव। अथापि नैषां परस्परं खण्ड्यखण्डकभावः, दूष्यदूषकभावो वा। अधिकारिभेदेन सर्वस्यापि समुपपन्नत्वात्।

एवं पञ्चदशाङ्गोपपादनं प्रथमतः तेजोबिन्दूपनिषदि दृश्यते तामेव सरणिमनुसृत्य श्रीशङ्करभगवत्पादाः स्वीयापरोक्षानुभूतौ तान्येव व्याख्यन्। ततश्च क्रमशः अस्मिन् पञ्चदशाङ्गयोगप्रकरणे तान्येव विवृतानि पश्यामः।

अत्रेदमवधेयम् — श्रीशङ्करभगवत्पादविरचितापरोक्षानुभूतेः विद्यारण्यकृतेति प्रसिद्धा काचन व्याख्या दृश्यते। तत्र शततमश्लोकव्याख्यानावसरे 'तु' शब्दस्वारस्यं वर्णयितुं प्रवृत्ताः व्याख्यातारः 'अनेन अष्टाङ्गयोगप्रतिपादकं पातञ्जलं अवैदिकत्वादनादेयमिति ध्वनितम्।" इत्याहुः। तत्तु योगशास्त्रस्थानतत्त्वापरिशीलनमूला वाचोयुक्तिरेव न वस्तुतत्त्वस्पर्शि। अष्टाङ्गयोगस्यैव प्रधानतः श्रुतिशतोपपाद्यमानत्वात्। अन्येषां सप्तानामपि तत्रैवान्तर्भावस्याप्यदुरूहत्वाच्च। तुष्यतुन्यायेनावैदिकत्वं निमील्याङ्गीकृत्यापि ब्रूमः— रूपकादिबहुविधालङ्कारपरिकर्मितेभ्यः वैदिकशास्त्रेभ्यः, सरळतराणि निर्दिष्टार्थबोधकानि अध्यात्मसुसंनिहितानि योगतन्त्रादिशास्त्राण्येव क्वचिद्विषये उत्कृष्टतराणीत्यपि अस्माभिर्न विस्मर्तव्यम्। यथोक्तं सनत्कुमारसंहितायां ब्रह्मरात्रे शास्त्रविभागप्रसङ्गे—

" लौकिकं वैदिकं चापि तथाऽऽध्यात्मिकमेव च।
त्रिविधं तत्र समुद्दिष्टं प्रधानं चोत्तरोत्तरम्॥
लौकिकं त्वर्थशास्त्रं स्यात् वैदिकं वेदसंयुतम्।
अन्यदध्यात्मविज्ञानं योगतन्त्रादि कथ्यते॥"

इत्यादि। अस्मिन्नेव पञ्चदशाङ्गयोगप्रकरणे षष्ठश्लोकव्याख्यानावसरे "न ह्यनेन प्रकरणेन योगशास्त्रं दूष्यत इति स्वप्नेऽपि शङ्क्यम्" इत्येवोक्त्वा योगशास्त्रेणास्याविरोधः सूचितः।

यद्यपि क्वचित् क्वचित् लक्षणभेदः उपपादनभेदश्च दृश्यते। यथा — अष्टाङ्गेषु सप्तमं ध्यानमेव प्रकृतपञ्चदशाङ्गेषु द्वितीयस्य नियमस्य लक्षणं भजते, ध्यानस्वरूपं त्वन्यदेवेत्यादि। नैतावता अष्टाङ्गयोगस्य त्याज्यत्वमेवाभिप्रेतमिति वक्तुं शक्यते। तत्तद्गुर्वनुगृहीतसाधनोद्युक्तानां तथाविधसोपानपर्वणोऽपि दर्शनसम्भवात्। यथाश्रुतभासमानविरोधस्य सुपरिहरत्वात् इति॥

स्वप्रकाशानन्दयतयस्तु हरिस्तुतिव्याख्यावसरे— अष्टाङ्गयोगमेव द्विविधं उपपादयन्तः अपरिपक्वचित्तानां पातञ्जलोऽष्टाङ्गयोग इति, परिपक्वचित्तानां तु श्रौतोऽष्टाङ्गयोगः इति च विभजन्ते। श्रौतानां निर्गुणयोगाष्टाङ्गानां लक्षणान्येतैः प्रमाणैः विवृण्वन्ति च। यथा—

"देहाक्षादौ विरक्तः यम इह नियमः स्वात्मतत्त्वेऽनुरक्तिः
बाह्यौदासीन्यमेवासनमसुनियतस्त्वक्षरार्थो मृषार्थात्।
प्रत्याहारः स्वबुद्धेः विषयविमुखता धारणा स्वात्मनिष्ठा
ध्यानं ब्रह्माहमस्मीत्यहगनहममोहात्मसंवित् समाधिः॥" इति,
"देहेन्द्रियादिवैराग्यं यम इत्युच्यते बुधैः।
अनुरक्तिः परे तत्त्वे नियमः परिकीर्तितः॥

सर्ववस्तुषूदासीना वृत्तिरासनमात्मनः ।
जगत्सर्वमिदं मिथ्या प्रतीतिः प्राणसंयमः ।
चित्तस्यान्तर्मुखीभावः प्रत्याहारस्स उच्यते ।
चित्तस्य निश्चलीभावः धारणाऽसौ निगद्यते ॥
सोऽहं चिन्मात्रमेवेति चिन्तनं ध्यानमुच्यते ।
ध्यानस्य विस्मृतिः सम्यक् समाधिरभिधीयते ॥" इति च ॥

एवममुं विषयं सङ्ग्रहतः परिसमाप्य प्रकृतं ग्रन्थमवलोकयामः —

प्रकृते च प्रकरणे पञ्चदशभिः श्लोकैः पञ्चदशाङ्गान्युपपादितानि । तत्तदङ्गसाधकानां च तत्रतत्र तदनुगुणा आख्याः च सूचिताः । तत्र— साधितयमाख्यप्रथमाङ्गः अग्रयोगी इति, नियमवान् आत्मयोगीति, ततः क्रमेण त्यागमौन-देश-कालयोगिनः इति, ततः सिद्धासनयोगी, मूलबन्धयोगी, देह साम्यंगतोयोगी, पूर्णदृष्टियोगी, प्राणायामयोगी, प्रत्याहारयोगी, नित्यानन्दात्मयोगी, ध्यानयोगी इति, ततश्च पञ्चदशः समाधिसिद्धयोगी इति च पञ्चदशानां योगिनां संज्ञाः कृताः ।

अन्तरान्तरा प्रसङ्गतः— योगस्यैव सर्वप्राधान्यं, पञ्चदशाङ्गयोगसम्बन्धिनां अङ्गानां अष्टाङ्गयोगसम्बन्ध्यङ्गापेक्षया उत्कृष्टतरत्वं, श्रवणमात्रस्य प्रपञ्चप्रतीतिराहित्यलक्षणोपमर्दहेतुत्वं, त्यागस्य निदिध्यासनाभ्यासकालीनस्य तदवसानकालीनस्य च भिन्नरूपत्वं, शास्त्रीयमौनस्य दुस्सम्पादत्वं, योगसाधनानुकूलतया अन्यत्रोक्तस्य देशविशेषादेः प्राधान्याभावः, कालस्यापि ब्रह्मरूपत्वं, योगशास्त्रेणास्याविरोधः, आसनजालपरिचयार्थपरिश्रमस्य वैयर्थ्यं, सुषुप्तिसमाध्योः वैलक्षण्यं चेत्यादयः बहवो विषयाः सम्यक् प्रतिपादिताः ।

एवं उपपाद्यानर्थान् समासत उपपाद्य परिमितप्रमाणोऽयं ग्रन्थः परिसमापितः ॥

अस्मिंश्च ग्रन्थे तत्रतत्रापेक्षितांशविशदीकरणाय काचन लघुटिप्पणी सङ्कलय्य संयोजिता । तत्र च प्रमाणतया उद्धृतानां श्रुतिवाक्यानां एतदीयोपनिषद्भाष्यादेवोद्धृत्य संयोजितः व्याख्याभागः । उपनिषद्ब्रह्मयोगीन्द्राणां विवरणं च तत्रतत्र संयोजितम् ॥

ग्रन्थस्यास्य च मातृकाद्वयं समुपलभ्यते । उभयमपि अस्मदीयकोशागारस्थमेव । एकं B 236 संख्यया अङ्कितम्, अपरं B 1019 संख्यया अङ्कितम् । प्रायशः उभयमपि शुद्धमेव ।

ग्रन्थोऽयं परिमितशरीरोऽपि स्वोपज्ञव्याख्यया, लघुटिप्पण्या चैवं समलङ्कृतस्सन् साधकानां अध्यात्मतत्त्वजिज्ञासूनां च हृदये कामपि क्रियोन्मुखीं प्रतिभां समादध्यादित्याशास्महे ।

प्राच्यविद्यासंशोधनालयः
मैसूरु

इति
सहृदयवशंवदः
एन्. एस्. वेङ्कटनाथाचार्यः

# विषयसूचनी

ॐ

श्रीमदप्पय्यदीक्षिताचार्यविरचितं

# पञ्चदशाङ्गयोगप्रकरणम्

## स्वोपज्ञव्याख्यासहितम्

[मङ्गलं, प्रतिज्ञा च]

सद्गुरुं प्रणिपत्याहं सद्योमुक्त्यैकसाधनम् ।
वक्ष्ये पञ्चदशाङ्गं तं योगं सव्याख्यमादरात् ॥

[मोक्षसाधनानि, तत्र योगस्य स्थानं च]

अत्र खलु श्रुतिस्मृतिपुराणादिप्रपञ्चितेषु कर्मभक्तिज्ञानयोगाख्येषु मोक्षसाधनेषु चतुर्षु सद्योमुक्तिं प्रति योगस्यैव अव्यवहितसाधनत्वं शिष्टैः पूर्वकैः सर्वैरभ्युपगतं दृश्यते[1] । स च योगः यमाद्यष्टाङ्गकः प्रसिद्धः दशोपनिषदादिषु पूर्वकैश्च बहुभिः विद्वद्भिः बहुषु प्रकरणेषु बहुधा प्रपञ्चितः ।

[प्रकृतप्रतिपाद्यमानानि तदङ्गानि, तन्मूलं च]

एवं सति इह अस्मत्प्रणीयमानेऽस्मिन् प्रकरणे पञ्चदशाङ्गकं योगं वक्ष्यामः । कानि पुनरेतानि पञ्चदशाङ्गानि ? इत्यपेक्षायां तेजोबिन्दूपनिषत्प्रमाणानुरोधेन सप्रपञ्चमुपन्यस्यते ॥[2]

[तत्र करणग्रामे ब्रह्मभावरूपयमोपपादनम्]

श्रीमन्त[3] पूर्वपुण्यैः [4]गुरुवरमुपलभ्येश्वरस्य प्रसादात्
सर्वं ब्रह्मेति बोधात्[5] प्रबलविषयसंसक्तमेतं चिरेण ।

---

1. अत्र 'तपस्विभ्यो धिको योगी ज्ञानिभ्यो पि मतोऽधिकः । कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥' 'स वै पुंसां परो धर्मो यद्योगेनात्मदर्शनम् ।' 'यं विनिद्राः जितश्वासाः संतुष्टाः संयतेन्द्रियाः । ज्योतिः पश्यन्ति युञ्जानाः तस्मै योगात्मने नमः ।' 'योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।' योगेन रहितं ज्ञानं न मोक्षाय भवेद्विधे । जन्मान्तरैश्च बहुभिः योगो ज्ञानेन लभ्यते । तस्माद्योगात्परतरो नास्ति मार्गस्तु मोक्षदः ।' इत्यादीन्यनुसंधेयानि ।

2. यद्यपि प्रसिद्धैः अष्टभिः अङ्गैस्साकं, एतदङ्गत्रयं च अन्यानि च सप्ताङ्गानि तेजोबिन्दूपनिषदि प्रतिपादितानि, तथैव व्याख्यातानि च । अथापि अस्मिन् प्रकरणे प्रसिद्धाष्टाङ्गापेक्षया अत्रोक्तानां पञ्चदशानाम्यङ्गानां वैलक्षण्यं श्रेष्ठ्यं च प्रतिपादितमिति ज्ञेयम् । ग्रन्थकारैरेव व्याख्यातः तेजोबिन्दूपनिषद्व्याख्यानभागश्च अत्रैव तत्तत्स्थानेषु संयोजितः ॥

3. आत्मश्रिया दैवीसम्पदा च पूर्णम् ।

4. अद्वयतारकोपनिषदि गुरुलक्षणमुक्तं—"आचार्यो वेदसम्पन्नः विष्णुभक्तो विमत्सरः । योगज्ञो योगनिष्ठश्च सदा योगात्मकः शुचिः । गुरुभक्तिसमायुक्तः पुरुषज्ञो विशेषतः । एवंलक्षणसम्पन्नो गुरुरित्यभिधीयते । गुशब्दस्त्वन्धकारः स्यात् रुशब्दस्तन्निरोधकः । अन्धकारनिरोधित्वात् गुरुरित्यभिधीयते । यस्मात्तद्रुपदेष्टासौ तस्माद्गुरुतरो गुरुः ।" इत्यादिना ।

5. सर्वस्यापि जगतो ब्रह्ममूलत्वात्, बीजात्प्ररूढे वृक्षे सर्वथा आच्छादितस्यापि बीजधर्मस्य विज्ञानदृष्ट्या अन्तःप्रविश्य दर्शनवत्, मायया आच्छादितस्यापि ब्रह्मधर्मस्य ज्ञानदृष्ट्या दर्शनेन, इन्द्रियाणां मायाप्रवणत्वं निवार्य ब्रह्मप्रवणताकरणं यमरूपेणाङ्गेन साधनीयमिति भावः ॥

नानादुःखैकहेतुं मुहुरपि करणग्राममायम्य नित्यम्
योऽहिंसाद्यैरुपेतः[1] जयति सहजतः सोऽग्रयोगी यमी स्यात् ॥ १ ॥

श्रीमन्तमिति ॥ पूर्वपुण्यैः प्रापणीयात् ईश्वरस्य प्रसादात् श्रीमन्तं गुरुवरं उपलभ्य तदुपदिष्टवाक्यार्थश्रवणजनितात् 'सर्वं ब्रह्मे'ति बोधात् करणग्रामं श्रोत्रादीन्द्रियसमूहं आयम्य जयति। सः यमी[2] प्रथमयोगी स्यात्। एवं द्वितीयतृतीयादिचतुर्दशयोगिनः द्वितीयश्लोकादिभिः क्रमेण वक्ष्यामः।

[पञ्चदशानां वक्ष्यमाणयोगाङ्गानां गणना]

कानि पुनः पञ्चदशाङ्गानि? इत्यत्राह तेजोबिन्दूपनिषदि—

"यमो हि नियमस्त्यागः मौनं देशश्च कालतः।
आसनं मूलबन्धश्च देहसाम्यं च दृक्स्थितिः॥
प्राणसंयमनं चैव प्रत्याहारश्च धारणा।
आत्मध्यानं समाधिश्च प्रोक्तान्यङ्गानि वै क्रमात्॥"[3]

इति॥ एवं पञ्चदशाङ्गान्युक्त्वा पुनः तत्तल्लक्षणानि तत्रैवाह[4]—

[श्रुत्युक्तं यमस्वरूपम्]

"सर्वं ब्रह्मेति वै ज्ञानात् इन्द्रियग्रामसंयमः।
यमोऽयमिति संप्रोक्तोऽभ्यसनीयो मुहुर्मुहुः॥"[5]

इति। एवमितरेषामप्यङ्गानां लक्षणानि[6] उपरितनश्लोकेषु प्रदर्शयिष्यामः।

[अष्टाङ्गेभ्यः पञ्चदशानां अङ्गानां वैलक्षण्यम्]

यथेदं यमाख्यं प्राथमिकमङ्गं अष्टाङ्गयोगशास्त्रप्रसिद्धं यमात् शतगुणं उत्कृष्टं भवति[7] एवमितरेषां चोत्कृष्टत्वात् अष्टाङ्गयोगिभिरपि इदं पञ्चदशाङ्गयोगशास्त्रं अवश्याभ्यसनीयमित्यवगन्तव्यम्॥

---

1. आद्यशब्देन सत्यास्तेयब्रह्मचर्य दयार्जवक्षमाधृतिमिताहारशौचानि ग्राह्याणि।

2. प्रथमं योगसोपानं अधिरूढवानित्यर्थः।

3. अथ तेजोबिन्दूपनिषदि श्रुतौ ज्ञानयोगं प्रपञ्चयितुं प्रसिद्धार्थवैलक्षण्येन यमाद्यष्टाङ्गानि अवान्तराणि च सप्ताङ्गान्याह-यम इत्यादिना। यमनियमासनानि त्रीण्यङ्गानि प्रसिद्धानि, तदवान्तराणि तु सप्त-त्यागः, मौनं, देशः, कालः, मूलबन्धः देहसाम्यं, दृक्स्थितिः इति। उपाङ्गान्येतानि। उपरितनानि च पञ्च प्रसिद्धानि। (भा) अथ निष्प्रतियोगिकब्रह्मावगतिसाधनतया पञ्चदशाङ्गयोगः उच्यते यम इत्यादिना (उ).

4. तेजोबिन्दूपनिषद्येव।

5. जीवेश्वरादिकं सर्वमिदं जगत् ब्रह्मानन्यदेवेत्येवं वेदान्तश्रवणमननजनितज्ञानात् इन्द्रियसमूहस्य संयमः तत्तद्विषयेभ्यो निग्रहः यम इति संप्रोक्तः, अयं मुमुक्षुभिः मुहुर्मुहुः पदेपदे अभ्यसनीयः। (भा) करणग्रामे ब्रह्मभाव एव यमः (उ)।

6. तेजोबिन्दूपनिषदुक्तानि इत्यर्थः।

7. योगशास्त्रप्रसिद्धस्य यमादेः केवलविषयसंस्पृष्टेष्वेव वाङ्मनःकायेषु व्यवस्थाविशेषजनकत्वात् तथा ब्रह्मासंस्पर्शाच्च एतदपेक्षया निकृष्टत्वं बोध्यम्।

[अष्टस्वप्यङ्गेषु संज्ञैक्येऽपि संज्ञिनां भिन्नत्वं उत्कृष्टत्वं च]

ननु अष्टाङ्गेभ्योऽप्यधिकानां सप्ताङ्गानां आन्तरालिकत्वात्[1] अस्य पञ्चदशाङ्गयोगशास्त्रस्य उत्कृष्टत्वानुपपत्तिः इति चेत्-न, पूर्वापरेषामष्टाङ्गानामपि प्रकृतानां संज्ञैकत्वेऽपि[2] विलक्षणत्वावगमात्। प्रदर्शितं प्रदर्शयिष्यमाणं च वैलक्षण्यं हि पञ्चदशाङ्गयोगशास्त्रस्य अष्टाङ्गयोग-शास्त्रस्य च भिन्नत्वमवगमयति। तस्मात् अष्टाङ्गयोगात् प्रकृतः पञ्चदशाङ्गयोगः उत्कृष्टतरः इति स्थितम् ॥

[ब्रह्मात्मनोरैक्यानुसन्धानरूपनियमविवरणम्]

तर्हि किं लक्षणो नियमः इत्यत्रोच्यते—

पश्चात् निस्संशयस्सन् मननविहतया तद्विजातीयवृत्त्या
साजात्यप्रत्ययं यः परमसुखनिधिं नित्यमावर्तयेत् सः।
ध्यानाख्ये सप्तमाङ्गे वसतिमुपगतः तन्निदिध्यासनाख्ये
तस्मिन् शब्दानुविद्धे जयति च नियमी स्वात्मयोगी द्वितीयः ॥ २ ॥

पश्चादिति ॥ पश्चात् पूर्वोक्तप्रकारकयमसिद्ध्यनन्तरं 'तत्त्वमसी'ति महावाक्यार्थ-श्रवणेन ब्रह्मज्ञानस्य विजातीयप्रत्ययोपमर्दासमर्थस्य जनितपूर्वत्वात् श्रवणानन्तरकालीन-मननेन विहतया निरस्तया तद्विजातीयवृत्त्या ब्रह्मविजातीयप्रपञ्चविषयकद्वैतवृत्त्या निःसंशयः ब्रह्मात्मैक्यप्रतिपादकश्रुत्याचार्यविषयकसंशयरहितः सन्[3] साजात्यप्रत्ययं ब्रह्मात्मनोः सजातीयत्वात् तदैक्यानुसन्धानात्मकप्रत्ययप्रवाहं यो नित्यमावर्तयेत् अविच्छिन्न-तैलधारान्यायेन अभ्यसेत्[4] सः निदिध्यासनाख्ये शब्दानुविद्धे[5] समाध्याख्ये च, सप्तमाङ्गे[6] अष्टाङ्गयोगशास्त्रोक्तध्यानसंज्ञके वसतिमुपगतस्सन्[7] जयति। सः नियमी[8] प्रकृतनियमवान् द्वितीयः स्वात्मयोगी स्यात्। तथाचास्य लक्षणमाह तेजोबिन्दूपनिषदि—

---

1. केवलं उपाङ्गत्रया प्रसिद्धाष्टाङ्गपोषकत्वात् स्वतन्त्रत्वाभावादित्यर्थः।

2. संज्ञिनां अर्थस्वरूपाणां योगशास्त्रोक्तार्थस्वरूपापेक्षया भिन्नत्वेन उपपाद्यमानत्वादित्यर्थः।

3. 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतेरभिप्रायः अत्र अनुसन्धेयः।

4. तत्सम्पिपादयिषया तत्साधनानुष्ठानं अभ्यासः।

5. अत्र मातृकायां 'शुद्धानुविद्धे' इति पाठः दृश्यते।

6. धारणा ध्यानं समाधिरिति क्रमविवक्षायामिति भावः।

7. वसतिं-नियतां वृत्तिमित्यर्थः।

8. 'शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' इति योगसूत्रम्। विष्णुपुराणे च— 'ब्रह्मचर्यमहिंसां च सत्यास्तेयापरिग्रहान्। सेवेत योगी निष्कामः योग्यतां स्वमनो नयन्। स्वाध्याय-शौचसन्तोषतपांसि नियतात्मवान्। कुर्वीत ब्रह्मणि तथा परस्मिन् प्रवणं मनः। एते यमाः सनियमाः पञ्च पञ्च प्रकीर्तिताः। विशिष्टफलदाः काम्याः निष्कामाणां विमुक्तिदाः॥' (6, 7, 36-38) इत्युक्तम्।

[श्रौतं नियमलक्षणम्]

"सजातीयप्रवाहश्च विजातीयतिरस्कृतिः
नियमो हि परानन्दो नियमात् क्रियते बुधैः" इति।[1]

[अस्यैव नियमस्य प्रकृते संप्रज्ञातसमाधिरूपता]

"ब्रह्माकारमनोवृत्तिप्रवाहोऽहङ्कृतिं विना।
संप्रज्ञातसमाधिः स्यात् ध्यानाभ्यासप्रकर्षतः॥"[2]

इति श्रुत्यंन्तरो[3]क्तस्य संप्रज्ञातसमाधेरप्यत्र समन्वितत्वमित्यवगन्तव्यम्।

[मननवियुक्तात् नियमात् अस्य वैलक्षण्यम्]

तर्हि अष्टाङ्गयोगशास्त्रोक्तनियमस्याप्युक्तलक्षणत्वमास्तामिति चेन्न—

तपः सन्तोषमास्तिक्यं दानं ईश्वरपूजनम्।
सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो व्रतम्॥"[4]

इति तल्लक्षणस्य अभिहितत्वात्। तत्र वेदान्तसिद्धान्तयोः भेदाभावेऽपि तच्छ्रवणमात्रस्य अभिहितत्वेन निदिध्यासनाख्यब्रह्मप्रत्ययप्रवाहानभिधानात् एकवाक्यत्वमनुपपन्नम्।[5]

[श्रवणज्ञानस्य असमर्थत्वानुपपत्तिशङ्का]

ननु वाक्यार्थश्रवणजनितस्य ब्रह्मज्ञानस्य विजातीयप्रत्ययोपमर्दनासमर्थत्वं यदुक्तं; तत् नोपपद्यते। कुतः?

"ज्ञात्वा देवं सर्वपाशापहानिः।"[6]

इत्याद्यनन्तश्रुतिभ्यः सर्वोपमर्दनसमर्थत्वावगमात्[7]। ब्रह्मज्ञानोदये हि[8] अज्ञानं निवर्तेत।

---

1. प्रत्यगात्मनो यः सजातीयः परमात्मा तद्विषयकाखण्डवृत्तिप्रवाहः, निदिध्यासनमित्यर्थः। विजातीयः जीवेश्वरादिप्रपञ्चः, तस्य तिरस्कृतिः अपवादः, एवं उभयक्रियोपेतः नियमः बुधैः मननजनितविज्ञानवद्भिः नियमात् प्रतिदिनं विधित एव क्रियते अयं नियमः, परानन्दनिमित्तत्वात्; अतः न दुःखाय भवेत् (भा)। अखण्डचिन्मात्रादिवृत्तिः सजातीया। घटपटादिवृत्तिः विजातीया (उ)।

2. 'वितर्कविचारानन्दास्मितारूपानुगमात् संप्रज्ञातः' इति तु योगसूत्रम् (1-17) अत्र 'योगी युञ्जीत सततं,' 'युञ्ज्याद्योगमात्मविशुद्धये,' 'युक्त आसीत मत्परः' इत्यादि च ध्येयम्।

3. मुक्तिकोपनिषत्, 2-53.

4. दर्शनोपनिषत् (2-1)

5. ततश्च योगशास्त्रोक्तनियमस्वरूपात् अस्य भिन्नत्वमेव सिद्धमिति भावः।

6. 'क्षीणैः क्लेशैः जन्ममृत्युप्रहाणिः। तस्याभिध्यानात् तृतीयं देहभेदे विश्वैश्वर्यं केवल आत्मकामः' इति तच्छेषः। (श्वे. 1-11)।

7. श्रौतज्ञानपदस्य परिनिष्ठितमर्थं अविभाव्य निमील्योक्तिरियम्।

8. अज्ञाने मूलप्रतिबन्धविभागापरिशीलनेन समान्योक्तिरियम।

अज्ञानस्यैव सर्वमूलत्वात्[1] तन्निवृत्तौ निवर्त्यान्तरं यत्किञ्चित् स्यादित्यनुपपन्नम्। श्रवण-मननविधानं[2] तु श्रवणमात्रेण अनुत्पन्नब्रह्मज्ञानं मन्दाधिकारिणं प्रतीत्यूह्यम्। अन्यथा ज्ञान-शास्त्रसामान्यवैयर्थ्यप्रसङ्गादिति।

[श्रवणज्ञानात् केवलात् मूलाज्ञाननिवृत्त्युपपादनम्]

अत्रोच्यते— न हि श्रवणजनितब्रह्मज्ञानेन कस्यचिदपि मूलाज्ञानं निवर्तेत। प्रतिबन्धाज्ञानस्य[3] केवलं निवृत्तिसंभवात्। मननविधानं तु निवृत्ताज्ञानस्यापि संशयसंभवेन[4] तन्निवृत्त्यर्थं इत्यवधूतोपनिषदादिषु प्रसिद्धम्[5]। न च कस्यचिदपि श्रवणमात्रेण ब्रह्मज्ञाना-नुत्पत्तिर्भवितुमर्हति[6]। नापि निष्प्रतिबन्धज्ञानं[7] कस्यचिदप्युद्भवेत्। न चैतेन ज्ञानशास्त्रस्य वैयर्थ्यं प्रसज्येत। प्रकृतयोगाङ्गत्वेन सार्थकयात्[8]। 'सर्वपाशापहानिः' इति श्रुतिस्तु मनननिदिध्यासनाद्युत्तरसाधनापेक्षब्रह्मज्ञानविषयिणी[9] इत्यदोषः। श्रवणमात्रेण ब्रह्मास्तित्व-लक्षणस्य परोक्षज्ञानस्योत्पत्तिसंभवेन[10] प्रपञ्चमिथ्यात्वज्ञानोदयेऽपि प्रपञ्चप्रतीतिराहित्य-लक्षणो[11]पमर्दासंभवात् तेन ब्रह्मास्तित्वज्ञानस्य संशयसाहित्योपपत्त्या तन्निवृत्त्यर्थक-मननोपपत्तिः इति सिद्धम्॥

[बहुभावात्मकजगद्धर्मात् दूरीभवनरूपत्यागस्वरूपोपपादनम्]

तर्हि तृतीयाङ्गं कीदृशमित्यत्रोच्यते—

ब्रह्मैवास्मीति नित्यं नियमनियमतः सच्चिदात्मावलोकः
संजातो यस्य नानाविधनिजहृदयग्रन्थिभेदैकहेतुः।
यः तत्याज प्रपञ्चं निखिलमपि महान् कोटिविध्यण्डरूपं
त्यागी योगी तृतीयः गुणरहितपरब्रह्मनिष्ठः स पूज्यः॥ ३॥

---

1. सर्वमपि मायिकं व्यवहारं प्रति मूलत्वात् इत्यर्थः।

2. तर्हि उक्तश्रवणज्ञानेनैव सर्वसम्पत्तौ 'श्रोतव्यो मन्तव्यः' इत्यादिना मननादिविधानं व्यर्थं स्यादित्यत आह—श्रवणेत्यादि।

3. जिज्ञासादिप्रतिबन्धकीभूतस्याज्ञानस्येत्यर्थः।

4. निश्चितानुभवमन्तरा कथमपि संशयबीजानिवृत्तेः।

5. 'तदेव कृतकृत्यत्वं प्रतियोगिपुरस्सरम्। अनुसन्दधदेवायं एवं तृप्यति नित्यशः॥ तृप्यन्नेव स्वमनसा मन्यतेऽसौ निरन्तरम्।' इत्यादिना इति भावः।

6. अतद्रूपप्रतिष्ठस्य वस्तुशून्यस्य शब्दज्ञानानुपातिनः ज्ञानविशेषस्योत्पत्तौ प्रतिबन्धकाभावात्।

7. तत्स्वावलम्बनं प्रतिबन्धकशतैरपि अवस्थाविशेषसहजैः अनिवर्त्यम्।

8. तथा च तस्य सोपानपर्वविशेषत्वमेव, न तु परमावधित्वम्।

9. 'द्रष्टव्यः' इत्युक्तदर्शनविषयिणीत्यर्थः।

10. हृदयासंस्पर्शिनः काल्पनिकज्ञानस्योदयेऽपीत्यर्थः।

11. ब्रह्मास्तित्वब्रह्ममूलत्वनिश्चयासहकृतप्रपञ्चप्रतीतिराहित्यलक्षणेति यावत्।

ब्रह्मेति ॥ यस्य नानाविधनिजहृदयग्रन्थिभेदैकहेतुः[1] सच्चिदात्मावलोकः ब्रह्मैवास्मीति नित्यं नियमेन क्रियमाणात् पूर्वोक्तलक्षणात् नियमात् जायते, यो महान् अनेककोटि-ब्रह्माण्डरूपं निखिलमपि प्रपञ्चं तत्याज प्रतीतिरहितमेवाकार्षीत्, स त्यागी त्यागाख्यक-तृतीयाङ्गवान् योगी निर्गुणपरब्रह्मनिष्ठत्वात् महद्भिः पूज्यः। तथाच श्रुतिः—

### [श्रुत्युक्तं त्यागलक्षणम्]

"त्यागः प्रपञ्चरूपस्य सच्चिदात्मावलोकनात् ।
त्यागो हि महतां पूज्यः सद्यो मोक्षप्रदायकः ॥" इति ॥[2]

### [प्रकृताङ्गसाधनीयार्थानां पूर्वोक्तार्थवैलक्षण्यम्]

ननु पूर्वश्लोकप्रपञ्चिते द्वितीयाङ्ग एव विजातीयतिरस्काररूपस्य प्रपञ्चत्यागस्य अभिहितत्वात् इह पुनरुक्तिदोषप्रसङ्गः इति चेत्—न। पूर्वत्र सजातीयप्रत्ययानुवृत्तिनिर्देशेन निदिध्यासनाभ्यासस्य अभिहिततया, इह सच्चिदात्मावलोकनशब्देन तदभ्यासावसान-कालीनानुभवनिष्ठायाः अभिहिततया च[3] प्रपञ्चत्यागस्य पुनरुक्तत्वेऽपि अर्थभेदः अवगन्तव्यः।

### [त्यागद्वैविध्योपपादनम्]

कथमिति? उच्यते। प्रपञ्चो हि स्थूलसूक्ष्मभेदेन द्विविधः प्रसिद्धः। तत्र स्थूलप्रपञ्च-त्यागस्य प्राक् निदिध्यासनाभ्यासात् कृतत्वेऽपि पश्चात् सच्चिदात्मावलोकनसमकाले[4] सूक्ष्मप्रपञ्चत्यागस्य क्रियमाणत्वात्[5]। सूक्ष्मप्रपञ्चस्य विजातीयत्वेऽपि तदभिमानिनो ब्रह्मतादात्म्यानुसन्धानात्मकसजातीयप्रत्ययावृत्तिविरोधाभावाच्च। कोटिविष्यण्डानां रूपमिव रूपं यस्य स इति व्युत्पत्त्या सूक्ष्मप्रपञ्चस्यापि विष्यण्डरूपत्वाविशेषेणाविरोधाच्चानवद्यमिति॥

### [जीवन्मुक्तस्यापि प्रारब्धदुःखस्यापरिहार्यता]

नन्वस्य त्यागयोगिनः सच्चिदात्मावलोकनवत्त्वेन भिन्नहृदयग्रन्थिमत्तया जीवन्मुक्त-त्वेऽपि प्रारब्धदुःखाभ्युपगमात्तन्निवर्तकोपरितनानन्दनिष्ठायाः[6] सम्पादनीयत्वात् तत्साधनं किमित्यपेक्षायां चतुर्थश्लोकेनाभिधीयते—

---

1. अत्र 'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इत्यादिकं अनुसन्धेयम्।

2. निदिध्यासनात्मकनियमद्वारा सच्चिदानन्दात्मनः सम्यगवलोकनात् प्रपञ्चरूपस्य त्यागः। विजातीयात्यन्ततिरस्कार एवेत्यर्थः। सोऽयं त्यागः सद्योमोक्षस्य जीवन्मुक्तेः प्रदायकः महतां महद्भिः पूज्यः अवश्यादरणीय इति (भा)। सच्चिदानन्ददृष्टिः अनृतादिप्रपञ्चं ग्रसतीत्यर्थः (उ)।

3. अनेन निर्दिष्टात्मावलोकनं अनुभवात्मकं पूर्वत्र न संभवतीति सूचितम्।

4. अवस्थाविशेषे इति यावत्। भिन्नावस्थासु च भावानुवृत्तिः तत्तदनुभूतार्थस्मरणात्मिकेत्यव-गन्तव्यम्।

5. अत्र 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इत्यादीन्यनुसन्धेयानि।

6. 'आत्मानमेव वीक्षस्व आत्मानं बोधय स्वकम्। स्वमात्मानं स्वयं भुङ्क्ष्व स्वस्थो भव' इत्युक्तप्रकारेण आनन्दरूपे स्वात्मनि नितरां स्थितिरेव निष्ठेत्युच्यते।

[तदर्थं लौकिकवाङ्मनसागोचरब्रह्मनिष्ठारूपमौनाङ्गीकारविधिः]

जीवन्मुक्तस्य तस्याप्युपरितननिजानन्दानिष्ठोपलब्ध्यै ।
मौनं संप्रापणीयं व्यवहृतिरहितं योगिगम्यं जडस्थम्
अन्यद्वा ब्रह्मवादान्यविषयकमुभेऽप्यात्मविद्योपकारि-
ण्यैकार्थ्यात्तद्दुरापं सहजमुपगतो मौनयोगी तुरीयः ॥ ४ ॥

जीवन्मुक्तस्येति ॥ पूर्वोक्तस्य तस्य जीवन्मुक्तस्यापि प्रारब्धदुःखनिवर्तकोपरितनानन्दनिष्ठायाः उपलब्ध्यै मौनं संप्रापणीयम् । किं लक्षणं तत् ? इत्यत उच्यते—व्यवहृतिरहितमिति । लौकिकवैदिकाशेषव्यवहारवर्जितं योगिगम्यं हठयोगिराजयोगिभ्यामन्यैः प्रकृतज्ञानयोगिभिः प्राप्यम् । किं च जडस्थं नैसर्गिकजाड्यवति जने अवस्थितम् ।

[केवलमूकभावात् जडत्वसमानाधिकरणमूकभावस्यैव उत्तमत्वम्]

ननु—"अन्धवत् जडवच्चैव मूकवच्च महीं चरेत्" इति जडमूकयोः द्वयोरपि ब्रह्मविदुपमानत्वमवगम्यते, तथापि मूकस्यैव मुख्यत्वात् तदनुक्तिदोषप्रसङ्गः इति चेत्— नायं दोषः । मूकस्य हि वाङ्मौने सत्यपि मानसिकसंरम्भो भवति[1] । जडस्य तु तत्संरम्भस्य च अभावात् तदीयं मौनमेव मुख्यं प्रकृतोपमानमिति युक्तमुक्तम् ॥

[द्विविधस्यापि मौनस्य आत्मविद्योपकारिता]

यद्वा ब्रह्मवादेभ्यः अन्ये विषयाः यस्य तत् लौकिकव्यवहारमात्रवर्जितं, अन्यत् संप्रापणीयम् । कुतः ? द्वयोरपि मौनयोः आत्मविद्योपकारित्वसाम्येन एकप्रयोजनकत्वात् । तत् तस्मात् दुरापं दुःखेनाप्तुं योग्यं मौनं सहजमित्यनन्तरविशेषणम् तदुपगतो मौनयोगी तुरीयः चतुर्थाङ्गवानित्यवगन्तव्यम् । तथाहि श्रुतिः —

[श्रौतं मौनलक्षणम्]

"यस्माद्वाचो निवर्तन्ते अप्राप्य मनसा सह ।
यन्मौनं योगिभिर्गम्यं तद्भवेत् सर्वदा जडैः ॥[2]
वाचो यस्मान्निवर्तन्ते तद्वक्तुं केन शक्यते ।
प्रपञ्चो यदि वक्तव्यः सोऽपि शब्दविवर्जितः ॥[3]

---

1. अत्र 'न मौनान्मुनिरुच्यते' इत्यादिकमनुसन्धेयम् ।

2. वाचः वेदान्तवचांस्यापि मनसा सुतरां शुद्धान्तःकरणेन सहाप्राप्य अनधिगम्य निवर्तन्ते अत्यन्तारूपत्वेन अवाच्यत्वात् अचिन्त्यत्वाच्च । यत् निष्प्रतियोगिकारूपब्रह्मविषयकं मौनं योगिभिः सम्यग् ज्ञानयोगविद्भिः लयकाले गम्यं तत् मूकसदृशैः जडैः गम्यं भवेत् इति लौकिकदृष्टान्तः (भा) ।

3. ननु उक्तं मौनं अज्ञैः वक्तुमशक्यमपि तद्ज्ञैः वक्तुं शक्यं इत्यत आह— वाच इति । वाचः यस्मात् मौनात् निवर्तन्ते । नश्यन्तीत्यर्थः तत् केन वक्तुं शक्यते ? तद्ज्ञैरपि प्रक्षीणवचस्त्वात्

इति वा तद्भवेन्मौनं सर्वं सहजसंस्थितम्।[1]
गिरा मौनं तु बालानां अयुक्तं ब्रह्मवादिनाम्[2] ॥

इति।

नन्विह द्वितीयपक्षेऽपि अवाङ्मनसगोचरारूपब्रह्मपरत्वमेव मौनस्यावगम्यते, न तु वाचिकपरत्वं मानसिकपरत्वं वेति चेत्— नैष दोषः। लौकिकवाङ्मनसागोचरचिद्रूप ब्रह्मनिष्ठात्मकमौनस्यैवविवक्षितत्वेन वाचिकमानसिकपरत्वाविरोधात्। "गिरा मौनं तु बालानां" इत्यनेन हि वाङ्मौनमात्रस्य निषेधः अभिप्रेयते। तस्मात् नारूपब्रह्मपरं[3] इति युक्तम् ॥

[उक्तयोगाभ्यासानुवृत्त्यर्थदेशविधिः]

ननु प्रतिपादितलक्षणमौनवतः जीवन्मुक्तत्वेनारूढत्वेऽपि उपरितनाभ्यासाभ्युपगमात् तदनुकूलो विजनदेशः अवश्याश्रयणीयः इत्याशङ्कायां इदमुच्यते—

अभ्यासारम्भकाले तदवधिसमये मध्यकाले च यस्मिन्
ब्रह्मण्यद्वैतबोधे न भवति हि जनः कोऽपि यद्व्याप्तमेतत्।
तद्ब्रह्मैव प्रदेशः स्ववसतिविषयः संबभूवेह यस्या-
रण्यं भूभृद्गुहा वा न नियमितमयं पञ्चमो देशयोगी ॥ ५ ॥

अभ्यासारम्भेति ॥ उपरितनाभ्यासो हि जीवन्मुक्तस्य निर्विकल्पसमाधिः, तस्यारम्भकाले तत्समाप्तिसमये मध्यकाले च अनुभूयमाने अद्वैतबोधे यस्मिन् ब्रह्मणि कोपि जनो न भवति,

"यत्र नान्यत् पश्यति नान्यत् शृणोति नान्यद्विजाति स भूमा।"[4]
"नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता।"[5]

---

वक्तुमशक्यमिति। यद्यपि प्रपञ्चः वक्तव्यः वक्तुं शक्यः। नामरूपवत्त्वात् सो पि वेदशब्दविवर्जितस्सन्नेव वाच्यः। ननु सुषुप्तः उत्थितेनैव मौनात् उक्तलक्षणात् उत्थितेन मौनलक्षणं वक्तुं शक्यमिति चेत्—नं। सुषुप्तवचसामविनाशित्वेन उत्थितस्य 'सुखमहमस्वाप्सम' इति प्रत्ययशब्दौ उपपद्येते, न तु उक्तमौनात् उत्थितस्य। पूर्ववचसां सरूपनष्टत्वादिति। (भा) प्रथमपक्षे जडैः वागादिकरणैः स्वस्वव्यापृत्युपरमणं मौनमित्युक्तम्। द्वितीयपक्षे तु स्वातिरिक्तयोः निष्प्रतियोगिकभावाभावरूपतया निर्वक्तुमशक्यत्वात्। प्रथमपर्यायगदितमौनं तु बालानां, न ब्रह्मविदामस्ति। (उ)

1. अथ मौनस्य पक्षान्तरमाह— इतीति। सप्रतियोगिकब्रह्मसहजबोधाख्यं मौनमिति वा भवेत्। मनोवागादिविलय एव मौनमिति नियमाभावः इत्यभिप्रायः। वाचा केवलं मौनं तु बालानां अब्रह्मविदामेव युक्तम्। तत्तु ब्रह्मवादिनां अयुक्तम्। मनोमौनस्यैव ब्रह्मवादिभिः सम्पादनीयत्वादिति। (भा)

2. अत्र— 'यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते। अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा। निरस्तविषयासङ्गं संनिरुद्धं मनो यदि। यदि यात्यात्मनो भावं तदा तत्परमं पदम्। तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम्। एतद् ज्ञानं च ध्यानं च शेषो न्यायस्य विस्तरः॥' इति अमृतबिन्दूपनिषदप्यनुसन्धेया॥

3. निषेधवाक्यमिति शेषः।

4. यस्मिन् ब्रह्मणि अनुभूयमाने तद्व्यतिरिक्तं किमपि सुखत्वेन न पश्यति न शृणोति न च विजानाति स एव भूमा, अन्यच्च अल्पमित्यर्थः (छां 7-23)।

5. बृहदारण्यके (5-7-2)

इति चैवंजातीयकश्रुतिभ्यो ब्रह्मेतरस्य सर्वस्य[1] निषिद्धत्वात्। एतत्। परिदृश्यमानं सर्वं जगच्च यत् व्याप्तं तत् सत्यज्ञानानन्तलक्षणं ब्रह्मैव प्रदेशः। विजातीयतिरस्कारमात्रेण ब्रह्मव्यतिरिक्तभूप्रदेशानुपलम्भात् विविक्तदेशश्रुतिः[2] गौणी मन्तव्येत्यभिप्रायः॥ सः ब्रह्मप्रदेश एव यस्य स्ववसतिविषयः स्वस्य कूटस्थस्य तादात्म्येन वसतेर्विषयः संबभूव। यस्य जीवन्मुक्तिपदारूढत्वेन सहजाभ्यासयोग्यतया स्वैकान्ताभ्यासार्थकं विजनस्थलभूतमरण्यं भूभृद् गुहा वा न नियमितं स्ववसतिविषयत्वेन न विहितम्, अयं देशयोगी पञ्चमः॥

## [श्रौतं देशलक्षणम्]

"आदावन्ते च मध्ये च जनो यस्मिन् न विद्यते।
येनेदं सततं व्याप्तं स देशो विजनः स्मृतः॥" इति।[3]

## [योगाभ्यासौपयिकदेशविशेषनिषेधस्य श्रुतिविरोधाशङ्का]

ननु अन्नपूर्णोपनिषदि माण्डव्याख्यो महर्षिः कौण्डिन्याख्यात् महर्षेः जीवन्मुक्तिपदं प्राप्यापि प्रारब्धदुःखासहिष्णुः सुमेरोः वसुधापीठे बद्धपद्मासनः सन् समाध्यभ्यासेन शिशुज्ञानसदृशीं विदेहमुक्तिं प्राप्तवानित्यवगम्यते[4]। तत्रैवं सति कथं अरण्यादिविजनस्थलप्रतिषेधः उपपद्यते? —

## [तादृशदेशविशेषनैयत्यस्य श्रुत्यनभिप्रेतता]

अत्रोच्यते— न हि अरण्यादिस्थलान्येव विजनानि स्युः इति नियमोऽस्ति। ग्रामपत्तनादिस्थलेष्वपि विजनानां गृहादीनां विद्यमानत्वात्। न च माण्डव्यवत् सुमेरुवसुधापीठमेवान्यैरपि विदेहमुमुक्षुभिराश्रयणीयमिति नियमोऽस्ति। वृक्षमूलकुलालशालाऽग्निहोत्रशालाऽऽदीनामपि स्थलान्तराणां श्रुत्यैव विहितत्वात्।

## [योगिनः स्वैरविहाराशङ्कापरिहारौ]

ननु ब्रह्मण एव प्रदेशस्य स्ववसतिविषयत्वाभ्युपगमेन विविक्तदेशश्रुतेः गौणीत्वकल्पनेन च जीवन्मुक्तस्य स्वैरविहार एव प्रसज्येत[5]। इति चेत्— न। समाध्यभ्यासकालेषु

---

1. तत्समानधर्मणः इत्यर्थः।

2. अत्र—'योगी युञ्जीत सततं आत्मानं रहसि स्थितः। एकाकी यतचित्तात्मा निराशीरपरिग्रहः। शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः। नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम्। तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रिय क्रियः। उपविश्यासने युञ्ज्यात् योगमात्मविशुद्धये' इत्यादिकं, 'विविक्तदेशमास्थाय सर्वसम्बन्धवर्जितः। योगाङ्गद्रव्यसम्पूर्णे तत्र दारुमये शुभे।' (त्रि. ब्रा. 89) इत्यादिकं च अनुसन्धेयम्।

3. यस्मिन् सच्चिदानन्दब्रह्मप्रदेशे आद्यन्तमध्येषु च जनो न विद्यते, येन च ब्रह्मप्रदेशेन इदं सर्वं जगत् व्याप्तं सः निर्गुणब्रह्मप्रदेश एव विजनः देशः स्मृतः (भा) तादृशदेशो ब्रह्मैवेत्यर्थः (उ)।

4. अत्र— "सुमेरोर्वसुधापीठे माण्डव्यो नाम वै मुनिः। कौण्डिन्यात् तत्त्वमास्थाय जीवन्मुक्तो भवत्यसौ। जीवन्मुक्तिदशां प्राप्य कदाचित् ब्रह्मवित्तमः। सर्वेन्द्रियाणि संहर्तुं मनश्चक्रे महामुनिः। बद्धपद्मासनस्तिष्ठन् अर्धोन्मीलितलोचनः। बाह्यानाभ्यन्तरांश्चैव स्पर्शान् परिहरन् शनैः॥" इत्यादिकं अनुसन्धेयम्।

5. बाह्यतो यस्य कस्यापि नियमस्य तिरस्कारे सति स्वैरविहार एव पर्यवसानादिति भावः।

यत्रकुत्रापि भूप्रदेशे विविक्तेऽवस्थितस्यापि जीवन्मुक्तदेहस्य व्यवहारकालेषु अपरिप्लुतब्रह्म-
प्रज्ञावत्तया निरन्तरात्मबोधवत्त्वेन सहजबोधवशात् भूप्रदेशोपवेशनेदंपर्यवर्जनमात्रा-
भिप्रायत्वात्। तस्मात् न जीवन्मुक्तस्य स्वैरविहारोऽदोषायेति मन्तव्यम्[1] ॥

[योगाभ्यासपरिवर्धनानुगुणकालनिर्देशः]

तर्हि अस्मात् पञ्चमयोगिनोऽन्यः षष्ठः किंलक्षणः ? इत्यपेक्षायां इदमुच्यते—

ब्रह्मादीनां अहन्तानिलयभववतां कल्पनाऽभूत्निमेषात्
भूतानां यत्सकाशात् कुटिलगतिमतां तारतम्यं गतानाम्।
यच्च ज्योतिस्स्वरूपं श्रुतिशतगदितं निष्कळानन्दमेकं
कालाख्यं ब्रह्म तत्र प्रकृतिमुपगतः काल्योगी तु षष्ठः ॥ ६ ॥

ब्रह्मेति ॥ अहन्तायाः आस्पदं भवः संसारः एषां अस्तीति तद्वतां कुटिलगतिमतां वक्रचरित्राणां उत्तमाधमभावेन तारतम्यं गतानां चतुर्मुखब्रह्मादीनां प्राणिनां कल्पना सृष्टिः निमेषात् झटिति यत्सकाशात् यस्य समीपात् अभूत् यच्च ज्योतिस्स्वरूपत्वाद्युक्तलक्षणं कालसंज्ञं ब्रह्म प्रसिद्धं तत्र ब्रह्मणि प्रकृतिं स्वभावमुपगतः निर्गुणब्रह्मतादात्म्यं प्राप्तः काल्योगी षष्ठः ॥

[श्रौतं काललक्षणम्]

अत्र श्रुतिः—

"कल्पना सर्वभूतानां ब्रह्मादीनां निमेषतः।
कालशब्देन निर्दिष्टं ह्यखण्डानन्दमद्वयम् ॥" इति ॥[2]

[ब्रह्मणः कालरूपत्वानुपपत्तिशङ्का]

ननु—

"कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्।
संयोग एषां न त्वात्मभावात् आत्माऽप्यनीशः सुखदुःखहेतोः ॥"

---

1. अत्र स्वैरविहारो न दोषायेत्यपि भाव्यम्। लौकिकदृष्ट्या स्वैरत्वेऽपि तादृशव्यक्तिदृष्ट्या स्वैरत्वाभावात्। ब्रह्मभावाच्च्यवनप्रसङ्गादर्शनात्। अत्र— 'जानामि धर्मं न च मे प्रवृत्तिः जानाम्यधर्मं न च मे निवृत्तिः। केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि' "स्वैरं स्वैरविहरणं तत्संसरणम्। साम्बरा दिगम्बरा वा, न तेषां धर्माधर्मौ न मेध्यामेध्यौ" (अव. 5) इत्यादिकमप्यनुसन्धेयम्।

2. चतुर्मुखब्रह्मादीनां सर्वप्राणिनां कल्पना यस्मात् भवति तत् अखण्डानन्दं ब्रह्मैव कालशब्देन निर्दिष्टम् (भा) यदज्ञाननिमेषविकल्पितं निखिलं तदधिकरणं ब्रह्म कालशब्दवाच्यम् (उ)।

3. सर्वस्यापि कारणं किमिति प्रश्नः—कालज्ञाः कालं, लोकायतिकाः स्वभावं, मीमांसकाः नियतिलक्षणं कर्मैव, केचित अहेतुकत्वलक्षणं यादृच्छिकत्वं, अपरे पञ्चभूतानि, केचन प्रकृतिं, केचन पुरुषं च सर्वकारणमाहुः। तत् सर्वं चिन्त्यमेव, अचेतनानां चेतनस्य च प्रत्येकं कारणत्वासम्भवात्। ननु प्रत्येकस्य कारणत्वासम्भवेऽपि एषां संयोग एव कारणं भवतु, संयोजकस्य आत्मनः सद्भावात्, इति चेत्। अनिच्छयाऽपि सुखदुःखभोक्तुः आत्मनः अत्र स्वातन्त्र्येणेशितृत्वानुपपत्तेः इति मुनयः समालोचयामासुरित्यर्थः। (श्वेताश्व 1-2.)

इति श्वेताश्वतरोपनिषदि कालादीनां कारणत्वं प्रतिषिध्य —

"ते ध्यानयोगानुगताः अपश्यन्
देवात्मशक्तिं स्वगुणैर्निगूढाम् ॥"[1]

इति देवात्मशक्तेः कारणत्वं प्रतिपादितम्। एतेन ब्रह्मणः कालातीतत्वमेव अवगम्यते, न तु कालाख्यत्वम्।

[ब्रह्मात्मकस्य कालस्य योगाङ्गत्वानुपपत्तिशङ्का]

न च उक्तलक्षणस्य कालस्य योगाङ्गत्वमुपपद्यते। योगाभ्यासास्य सन्ध्ययोरुभयोरपि नियमेन कर्तव्यत्वविधानात्। उक्तपूर्वाणां यमादीनां अङ्गानामिव प्रकृताङ्गस्य च ब्रह्मपरत्वादनेन योगशास्त्रप्रसिद्धाङ्गप्रतिषेधवशात् मुमुक्षूणां अभ्यासप्रवृत्तिवैमुख्यं तेन स्वेच्छाचारश्च निरङ्कुशौ प्रसज्येयाताम्।

[उक्तसर्वंब्रह्मवादस्य केवलयोगशास्त्रदूषणार्थत्वाशङ्का]

न च "सर्वं ब्रह्म" इति वादैः अवगतिभिर्वा कश्चित् कृतार्थो भवितुमर्हति[2]। तस्मात् योगशास्त्रदूषणार्थमेवेदं प्रकरणं प्रवृत्तं[3] इति प्राप्ते, इदमुच्यते—

[उक्तांशस्य सर्वत्र ब्रह्मानुभवनिष्ठासम्पादनावश्यकतापरत्वम्]

न ह्यनेन प्रकरणेन योगशास्त्रं दूष्यते इति स्वप्नेऽपि शङ्क्यम्[4]। यथाशास्त्रं सन्ध्याद्वयाभ्यासद्वारा निर्गुणपरब्रह्मानुभूतिनिष्ठत्वेन ब्रह्मवादावगतिमात्रनिष्ठत्वाशङ्काऽनुपपत्तेः[5]। न च प्रकृतकालयोगिनः यमादिपूर्वोक्ताङ्गिनां वा स्वेच्छाचारगन्धोऽपि भवितुमर्हति।

[आरूढारुरुक्षुभेदेन विषयनिर्णयावश्यकता]

यद्यपि प्रकृताङ्गानां ब्रह्मपरत्वापादनेन योगशास्त्रप्रसिद्धाङ्गप्रतिषेधो भवति। तथापि जीवन्मुक्तपरत्वात् जीवन्मुमुक्षूणां न तत्राभ्यासप्रवृत्तिवैमुख्यं भवितुमर्हति[6]। यथा चावधूतोपनिषदि—

"शृण्वन्त्वज्ञाततत्त्वास्ते जानन् कस्मात् शृणोम्यहम् ॥"[7]

इत्यादिवचनैः श्रवणादीनां ब्रह्मविद्यासाधनानां आरूढपरत्वेन प्रतिषिद्धत्वेऽपि आरुरुक्षुपरत्वेन अप्रतिषेधो भवति, तथा अत्रापि इत्यवगन्तव्यम् ॥

---

1. एवं ध्यानयोगयुक्ताः मुनयः अन्ततः— यः उक्तकालात्मयुक्तानि निखिलानि कारणानि अधितिष्ठति एकः, तादृशं महाशक्तिसंवलितं ज्योतीरूपं परमात्मानं दृष्टवन्तः इत्यर्थः।

2. हृदयानारूढविषयप्रतिपादनेन प्रयोजनाभावादिति भावः।

3. योगशास्त्रे तु अभ्याससौलभ्यपरिपूर्णान्येवाङ्गानि प्रतिपादितानीति भावः।

4. योगशास्त्राण्याधारीकृत्यैवास्य प्रकरणस्य प्रवृत्तत्वादिति यावत्।

5. यथावस्थितानुभवजनकक्रियाणामेवात्र निर्देशात्।

6. तथा च योगशास्त्रस्य जीवन्मुमुक्षुविषयत्वमिति ध्येयम्।

7. साङ्कृतिर्हि दत्तात्रेयं परिसमेत्य अवधूतलक्षणं प्रपच्छ। तदा भगवान् दत्तात्रेयः—'अक्षरत्वात् वरेण्यत्वात् धूतसंसारबन्धनात्, तत्त्वमस्यादिलक्ष्यात्त्च अवधूत इतीर्यते। यो विलङ्घ्याश्रमान् वर्णान् आत्मन्येव स्थितः सदा। अतिवर्णाश्रमी योगी अवधूतः स कथ्यते।' इति अवधूतलक्षणं प्रतिपाद्य, तदीयां कृतकृत्यतां तदीयं भावसौंदर्यं च वर्णयन् एवमाह— शृण्वन्त्वित्यादि। अवधूतस्य अन्यस्य कर्तव्यं किमपि नास्तीति यावत्।

[ब्रह्मणः कालरूपतोपपत्तिः]

कालातीतस्यापि ब्रह्मणः कालाख्या तु, आकाशातीतस्यापि ब्रह्मणः आकाशाख्येव[1] अनवद्या ॥

[सहजसिद्धासनस्वरूपम्, योगशास्त्रोक्तासनस्य अप्रयोजकता च]

तर्हि सप्तमयोगी कः? इत्यतः उच्यते—

पद्मादीन्यासनानि श्रुतिषु निगदितान्यप्यनावश्यकानि
ब्रह्मात्मैकत्वनिष्ठावत इह तु यतो ब्रह्मणोऽजस्रचिन्ता ।
सिध्यत्यायासलेशं क्वचिदपि च विना जारचिन्तेव नार्याः
संप्रोक्तं ह्यासनं तच्चरणविरहितं सप्तमस्तत्र योगी ॥ ७ ॥

पद्मेति ॥

"स्वस्तिकं गोमुखं पद्मं वीरसिंहासने तथा।"[2]

इत्यादिश्रुतिषु निगदितानि प्रोक्तान्यपि पद्मादीन्यासनानि ब्रह्मात्मैकत्वनिष्ठावतः ज्ञानयोगारूढस्य अनावश्यकानि। कुतः? यतः इह देहे विद्यमानस्यापि तस्य क्वचिदपि आयासलेशमपि विना अजस्रब्रह्मचिन्ता सिध्यति। सहजानुभूतिमत्त्वेन सार्वकालिकब्रह्म-स्मरणवत्तया आसननैरपेक्ष्यादिति भावः। कथं अजस्रचिन्ता? इत्यत्र सदृष्टान्तमुच्यते— नार्याः चोरभर्तृध्यानमिवेति। तदिदं अजस्रब्रह्मचिन्तात्मकं आसनं—

"जानूर्वोरन्तरे कृत्वा सम्यक् पादतले उभे ॥"[3]

इत्यादिश्रुत्युक्तचरणविरहितं अनुष्ठानविहीनं संप्रोक्तं हि। तत्रासने योगी युक्तः सप्तमः ॥

[ब्रह्मचिन्तनस्यैव सुखासनत्वं सिद्धासनत्वं च]

ब्रह्मणः सुखरूपत्वात् तच्चिन्तात्मकं आसनमेव सुखासनमिति तस्मिन् ब्रह्मणि सिद्धिं गतत्वात् सिद्धासनमिति चावगन्तव्यम्[1]।

---

1. अत्र 'अनिर्वचनीयज्योतिः सर्वव्यापकं निरतिशयानन्दलक्षणं परमाकाशं' इत्यादिकं अनुसन्धेयम् (मं. ब्रा. 4-3)

2. 'भद्रं मुक्तासनं चैव मयूरासनमेव च। सुखासनं समाख्यं च नवमं मुनिपुङ्गव' इति तच्छेषः (दर्शनो. 3-1)

3. समग्रीवशिरःकायः स्वस्तिकं नित्यमभ्यसेत्' इति तदुत्तरार्धम् (दर्शनो. 3-3) एवमेवात्र नवानामपि आसनानां लक्षणं प्रतिपादितम्।

4. योगशास्त्रे तु—'स्थिरसुखमासनम्। तद्यथा पद्मासनं वीरासनं भद्रासनमित्यादि। प्रयत्नो-परमात् सिध्यत्यासनम्, येन नाङ्गमेजयो भवति, अनन्ते वा समापन्नचित्तं आसनं निर्वर्तयतीति। शीतोष्णादिभिः द्वन्द्वैः आसनजयात् नाभिभूयते। सत्यासनजये प्राणायामसिद्धिः' इत्याद्युक्तम्।

[श्रौतं एतदासनलक्षणम्]

तथा च श्रुतिः —

"सुखेनैव भवेद्यस्मिन् अजस्रं ब्रह्मचिन्तनम्।
आसनं तद्विजानीयात् अन्यत् सुखविनाशनम् ॥"[1]

इति।

"सिद्धये सर्वभूतादिविश्वाधिष्ठानमद्वयम्।
यस्मिन् सिद्धिं गताः सिद्धाः तत् सिद्धासनमुच्यते ॥"[2]

इति च ॥

[ब्रह्माकारपरिणामिचित्तसम्पादनरूपमूलबन्धोपपादनम्]

तर्हि अष्टमयोगी कः ? इत्यत्रोच्यते—

"मूले यस्मिन् परस्मिन् त्रिगुणविरहिते बध्यते ब्रह्मणि द्राक्
ब्रह्माकारं विशुद्धं प्रबलपरिचयात् चित्तमेकान्तदृष्ट्या।
सेव्योऽयं मूलबन्धः सततमपि परब्रह्मविद्भिर्महद्भिः
श्रद्धामन्यत्र हित्वा हठविषय इमं योऽभ्यसेदष्टमः स्यात् ॥ ८ ॥

मूलइति ॥ सकलजगत्कारणीभूते निर्गुणे यस्मिन् परब्रह्मणि ब्रह्माकारं अत एव विशुद्धं चित्तं प्रबलपरिचयात् दृढतराखण्डैकरसाभ्यासात् बध्यते ब्रह्माकारपरिणामवशात् विषयव्यापारहीनं भवतीति भावः। अयं मूलबन्धः परब्रह्मविद्भिः जीवन्मुक्तैः महद्भिः सततं अनवरतमपि एकान्तदृष्ट्या निर्विकल्पादिसमाध्यात्मकरहस्यावलोकनेन सेव्यः अभ्यसनीयः।

[श्रौतं मूलबन्धलक्षणम्]

तथा च श्रुतिः —

"यन्मूलं सर्वलोकानां यन्मूलं चित्तबन्धनम्।
मूलबन्धः सदा सेव्यः योग्योऽसौ ब्रह्मवादिनाम् ॥"[3]

इति ॥

---

1. एवं यमनियमौ अङ्गभूतौ उपाङ्गभूतान् त्यागादींश्च उक्त्वा अथासनलक्षणमाह—सुखेनेति। यस्मिन् आसने स्थितस्य अजस्रं सर्वदा ब्रह्मचिन्तनं परब्रह्माभिध्यानं सुखेन अनायासेनैव भवेत् तदेवासनमिति विजानीयात्। अन्यत्तु स्वस्तिकाद्यासनं सुखविनाशनमेव स्यात्। (भा)

2. ननु सिद्धासनस्य सुखनिमित्तत्वात् अवश्यसम्पादनीयमित्यतः सिद्धासनं च वैलक्षण्येनाह—सिद्धये इति। सर्वभूतादेः विश्वस्य प्रपञ्चस्य अधिष्ठानं, अद्वयमिति षष्ठ्यर्थे द्वितीया, तस्य ब्रह्मणः सिद्धये प्राप्त्यै तस्मिन् ब्रह्मणि सिद्धाः सम्यग्दर्शिनः सिद्धिं प्राप्तिं गताः इति यत् तत् सिद्धासनमित्युच्यते। अतः इह अणिमादिसिद्धितदासनाद्यनवकाशः इति भावः। (भा) ध्यानानुकूलं सुखासनं, सिद्धसिद्धिदं ब्रह्म सिद्धासनं च न तु उक्तलक्षणम्। (उ)

3. हठयोगिभिः यः मूलबन्धः क्रियते तद्विलक्षणं मूलबन्धमाह— यदिति। यत् सर्वलोकानां मूलं कारणं, चित्तबन्धनम् यन्मूलं, यत्कारणकम्, यद्वा चित्तबन्धनस्य यन्मूलमिति तद् ब्रह्मैव मूलबन्धः। योग्यः असावेव ब्रह्मवादिभिः सदा सेव्यः। ननु अपानादिबन्धः। अत्र राजयोगिनामिति पाठान्तरम्। (भा) सर्वकारणं ब्रह्मैव मूलबन्धः नत्वाकुञ्चनादिः। अयं च राजयोगिनां, न तु हठयोगिनाम्। (उ)

[हठयोगोक्तमूलबन्धस्य त्याज्यता]

योऽन्यत्र हठयोगविषये मूलबन्धे—

"गुदं पार्ष्ण्या तु संपीड्य वायुमाकुञ्चयेत् बलात् ।
वारंवारं यथा चोर्ध्वं समायाति समीरणः ॥"[1]

इति योगशिखोपनिषत्प्रोक्ते लक्षणे श्रद्धां हित्वा इमं ज्ञानयोगविषयं मूलबन्धं उक्तलक्षणमभ्यसेत, अयं अष्टमः मूलबन्धाख्यकाष्टमाङ्गवान् स्यात् ॥

[ब्रह्मसाम्यात्मकदेहसाम्योपपादनम्]

तर्हि नवमाङ्गवान् योगी किंलक्षणः? इत्यपेक्षायां इदमुच्यते —

"साम्यं ब्रह्मण्यखण्डे रसवति परमे भूम्नि नैसर्गिकं हि
प्राप्नोत्यत्रैवविद्वान् नियतपरिचयात नीयमानोऽङ्गसाम्यम् ।
ग्रीवादीनां समत्वं न कृतमितरथा शुष्कवृक्षार्जवं वा
योऽजस्राभ्यासयोगी नवम इह महान् देहसाम्यं गतोऽयं ॥ ९ ॥

साम्यमिति ॥ नियतपरिचयात् अङ्गसाम्यं नीयमानः विद्वान् अखण्डे रसवति परमे भूम्नि ब्रह्मणि नैसर्गिकं साम्यं अत्रैव प्राप्नोति हि । इतरथा शुष्कवृक्षार्जवमिव ग्रीवादीनां समत्वं न कृतं स्यात् । यः इह अजस्रं ब्रह्माभ्यासयोगी नवमः देहसाम्यं गतोऽयं महान् इत्यन्वयः ।

[तस्य श्रौतं लक्षणम्]

अत्र श्रुतिः —

"अङ्गानां समतां विद्यात् समे ब्रह्मणि नीयते (लीयते) ।
नो चेत् नैव समानत्वं ऋजुत्वं शुष्कवृक्षवत् ॥"[2]

स्पष्टोऽर्थः ॥

[ब्रह्मदृष्ट्यात्मकदृक्स्थितिस्वरूपविवरणम्]

तर्हि दशमाङ्गवान् कः? इत्यत्रोच्यते—

पूर्वोक्तब्रह्मदृष्टिं सहजरसमयीं दुर्लभामेव कृत्वा
पश्येत् सर्वं जगच्च क्षरमसदखिलप्राणिमद्ब्रह्मरूपम् ।
सोदारा दृष्टिरेका त्रिपुटिविरहिता स्वानुभूत्यैकगम्या
नासाग्रालोकनी न प्रभवति दशमः पूर्णदृष्टिर्हि योगी ॥ १० ॥

---

1. योगशिखोपनिषत् (1-104) पायुमाकुञ्चयेदिति पाठान्तरम् । एतदनुगुणमेव 'अपानमूर्ध्वमाकृष्य' इति योगचूडामण्यादिः ।

2. ऋजुकायशिरोभावः इत्यादियोगशास्त्रोक्तार्थविलक्षणमाह— अङ्गानामिति । अङ्गानां अन्तरङ्गादीनां समतां समे ब्रह्मणि विद्यात् । तत्र नो विद्याच्चेत् तदा नैवाङ्गानां समानत्वं नीयते । ब्रह्मव्यतिरिक्तस्य सर्वस्य च असमत्वात् । तत्र दृष्टान्तमाह— यथा शुष्कस्य वक्रस्य वृक्षस्य ऋजुत्वं न कथञ्चन नीयते तद्वदिति । (भा) स्थूलादिदेहानां समे ब्रह्मणि विलयभावः समता न हि स्तम्भवत् ऋजुतेत्यर्थः (उ) अत्र लीयते इति पाठान्तरम् ।

पूर्वोक्तेति ॥ सहजरसमयीं अखण्डैकरससहजानुभवस्वरूपिणीं मनुष्यसहस्रेषु केनचिल्लभ्यत्वेन दुर्लभां च पूर्वोक्तनिर्गुणब्रह्मदृष्टिं कृत्वा क्षरं विनाशि असत् अनृतं अखिलप्राणिमत् सर्वजीववत् सर्वं जगत् कर्मभूतं ब्रह्मरूपमित्यनन्तरविशेषणं पश्येत्। सा दृष्टिः उदारा गम्भीरा एका सर्वदृष्ट्युत्तमत्वेन मुख्या अद्वितीया वा त्रिपुटिविरहिता दृष्टिदर्शनदृश्यादि भेदविहीना स्वानुभूत्येकगम्या परमात्मानुभवैकप्राप्या प्रभवति। न तु नासाग्रालोकनी, नासाग्रदर्शनस्य भ्रूमध्यगतखण्डज्योतिराविष्कारमात्रहेतुत्वेन अखण्डज्योतिरनुभवहेतुत्वानुपपत्तेः। सोऽयं पूर्णदृष्टिः सर्वगतपरमात्मदर्शनवान् योगी दशमः इति।

[श्रौतं दृक्स्थितिलक्षणम्]

अत्र श्रुतिः —

"दृष्टिं ज्ञानमयीं कृत्वा पश्येत् ब्रह्ममयं जगत्।
सा दृष्टिः परमोदारा न नासाग्रावलोकिनी ॥
दृष्टिदर्शनदृश्यानां विरामो यत्र वा भवेत्।
दृष्टिः तत्रैव कर्तव्या न नासाग्रावलोकिनी ॥" इति ॥[1]

अनेन राजयोगोऽपि पूर्वपक्षे अभिप्रेतः इति मन्तव्यम् ॥

[प्राणवृत्तिनैश्चल्यरूपप्राणायामस्वरूपम्]

तर्हि एकादशतमो योगी कः? इत्यपेक्षायां उच्यते —

आभासानां निषेधं मुहुरपि जगतां रेचकं प्राहुरेके
ब्रह्मैवास्मीति चिन्तां सहजमनुसृतां पूरकं कुम्भकं तु।
वृत्तीनां निश्चलत्वं स्वयमनुभवतः प्राणचित्ताश्रयाणां
प्राणायामोऽयमेकादशतम इह न घ्राणपीडात्मयोगे ॥ ११ ॥

आभासानामिति ॥ प्रातिभासिकजगतां निषेधः रेचकः। ब्रह्मात्मैक्यसहजचिन्तनं पूरकः। वृत्तिनैश्चल्यं कुम्भकः[2]। एते त्रयोऽपि परमात्मानुभवात् स्वयमेव भवन्तीति

---

1. ननु योगिभिः नासाग्रे दृष्टिः क्रियते। सैव इहापि ज्ञानयोगे स्यात् इत्यत आह—दृष्टिमिति। ब्रह्माकारमनोवृत्तिज्ञानमयीं दृष्टिं कृत्वा सर्वं जगत् ब्रह्ममयं एकरसब्रह्मस्वरूपं पश्येत् सा दृष्टिः परमोदारा अतिगम्भीरा स्यात्। न तु नासाग्रावलोकिनी। अनया हि दृष्ट्या चैतन्यांशस्फूर्तिः केवलं भवेत्। न तु अखण्डचैतन्यस्फूर्तिः इत्यतः इह ज्ञानयोगे नासाग्रावलोकिनी अनुपयुक्तैवेति ॥ पक्षान्तरमाह द्रष्ट्विति। द्रष्टा प्रत्यगात्मा, दर्शनं बुद्धिवृत्तिविशेषः, दृश्यं परब्रह्म। त्रयाणामेषां विरामः यत्र भवेत् तत्र निष्प्रतियोगिकब्रह्मणि सप्रतियोगिकब्रह्मद्वारेणैव दृष्टिः कर्तव्या, न तु नासाग्रावलोकानी। पूर्णफलजनकत्वात्। (भा) स्वाज्ञदृष्टिः स्वातिरिक्तं जगत् पश्यति, सर्वाधिकरणदृष्टिः स्वज्ञः परमार्थदृष्टिः ब्रह्ममात्रवित्। तेन दृश्यादित्रिपुट्यपह्नवसिद्धे ब्रह्मणि स्वमात्रदृष्टिः कार्येत्यर्थः (उ)

2. दर्शनोपनिषदादिषु तु—'बाह्यादापूरणं वायोः उदरे पूरको हि सः। सम्पूर्णकुम्भवद्वायोः धारणं कुम्भको भवेत्। बहिर्विरेचनं वायोः उदराद्रेचकः स्मृतः' इत्याद्युक्तम्। (6-18)

महान्त आहुः। अयं रेचकादित्रयलक्षणः प्राणायामः[1] एकादशतमः। इहात्मयोगे घ्राणपीडा न। घ्राणपीडानपेक्षमेव प्राणवृत्तीनां चित्तवृत्तीनां च समकालनैश्चल्यं सिध्यतीत्यभिप्रायः।

[श्रौतं प्राणायामलक्षणम्]

अत्र श्रुतिः —

"चित्तादिसर्वभावेषु ब्रह्मत्वेनैव भावनात्।
निरोधः सर्ववृत्तीनां प्राणायामः स उच्यते।[2]
निषेधनं प्रपञ्चस्य रेचकाख्यः समीरितः।
ब्रह्मैवास्मीति या वृत्तिः पूरको वायुरुच्यते।[3]
तयोः तद्वृत्तिनैश्चल्यं कुम्भकः प्राणसंयमः।
अयं चापि प्रबुद्धानां, अज्ञानां घ्राणपीडनम्।"

इति॥

[विषयेष्वप्यात्मभावेन चित्तरञ्जनरूपप्रत्याहारविवरणम्]

तर्हि द्वादशतमो योगी कः ?-इत्यतः उच्यते —

दृष्ट्वा यो दग्धवस्त्रादिकमिव विषयेष्वात्मतां जायमानां
चित्तस्यात्मैक्यविष्फूर्त्यनुसरणवशात् रञ्जनं साधु कुर्वन्।
किंचित् किंचिच्च मध्ये विषयरत इव व्यापृतो निर्विकारः
प्रत्याहारैकनिष्ठो जयति सुधिवरो द्वादशाङ्गयेव योगी॥ १२॥

दृष्ट्वेति॥ यः विषयेषु देहेन्द्रियादिषु दग्धवस्त्रादिकमिव प्रातिभासिकतया जायमानां, आत्मगतां दृष्ट्वा आत्मैक्यविष्फूर्त्यनुसरणवशात् ब्रह्मात्मैकत्वस्फूरणानुसरण-पारवश्येन चित्तस्य रञ्जनं मनोलालनं साधु सम्यक् कुर्वन् सन् मध्ये कदाचित्

---

1. अमृतनादोपनिषदि उत्तार्धेन सार्कं — 'सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह। त्रिः पठेदायतप्राणः प्राणायामः स उच्यते' इत्यप्युक्तम्। श्वासप्रश्वासयोः गतिविच्छेदः प्राणायामः इति योगसूत्रम्। (2-49)

2. अथ प्राणायामलक्षणमाह चित्तादीति। चित्तादिषु सर्वविकारेषु ब्रह्मत्वेन सप्रतियोगिक-ब्रह्मत्वेनैव भावनात् नामरूपपरित्यागद्वारा सच्चिदानन्दस्वरूपावधारणात् इत्यर्थः। बाह्याभ्यन्तर-सर्वेन्द्रियवृत्तीनां निरोध एव प्राणायामः इत्युच्यते। (भा) विद्वत्प्राणायामस्वरूपमाचष्टे-चित्तादिति। सर्वं ब्रह्मेति भावनमेव प्राणायाम इत्यर्थः। (उ)

3. रेचकपूरककुम्भकाख्यत्रिविधप्राणायामस्य लक्षणं, प्राणपीडनस्य अज्ञविषयत्वं च द्वाभ्यामाह— निषेधनमिति। जीवेश्वरादेः विजातीयप्रपञ्चस्य निषेधनं तिरस्कारः रेचकाख्यः। 'सच्चिदानन्दलक्षणं ब्रह्मैवास्मी'ति सजातीयप्रत्ययरूपिणी या चित्तवृत्तिः सा पूरको वायुरुच्यते। या चित्तवृत्तिः उक्ता तस्याः चित्तवृत्तेः निश्चलत्वं प्रवाहरूपेण अप्रच्युतिः इत्यर्थः। यदा भवेत् तदा कुम्भकाख्यः प्राणसंयमः स्यात्। ईदृशः प्राणायामश्च प्रबुद्धानां ब्रह्मज्ञानिनामेव स्यात्। अज्ञानां तु तदितरेषां घ्राणपीडनम्। नासापीडन-कारिणां हठयोगिनां, अज्ञत्वप्रसिद्धेः। (भा) 'स्वातिरिक्तं जगत् नेत्यनुसन्धानं रेचकवृत्तिः। तदेवास्मीति पूरकवृत्तिः। तद् वृत्तिस्थैर्य' कुम्भकवृत्तिः। स्वज्ञानामेवम्। स्वाज्ञानां तु घ्राणपीडनमेव फलमित्यर्थः (उ)

स्वस्फूरणतिरोभावे सति किंचित् किंचित् विषयसंसक्त इव तदनुकूलव्यापारं कुर्वन् निर्विकारः तन्निमित्तविक्रियारहितः प्रत्याहारे मुख्यनिष्ठावान् बुद्धिमतां वरः एष योगी द्वादशाङ्गी जयति ॥

[श्रौत प्रत्याहारलक्षणम्]

तथाच श्रुतिः —

"विषयेष्वात्मतां दृष्ट्वा मनसः चित्र (त्त)रञ्जनम्।
प्रत्याहारः स विज्ञेयोऽभ्यसनीयो मुहुर्मुहुः॥" इति ॥[1]

[सर्वत्र मनसः स्वानुभवे धारणरूपधारणविवरणम्]

तर्हि त्रयोदशतमाङ्गी कः? इत्यत्रोच्यते —

ब्रह्मात्मैक्यानुभूतिं सुदृढमधिगतं वासनामात्रहेतोः
चित्तं यत्र प्रयाति प्रभवति विमलब्रह्मदृष्टिस्तु तत्र।
तद्वच्चैवाप्रयत्नात् प्रभवति मनसो धारणं स्वानुभूतौ
नित्यानन्दात्मयोगी त्रयपरदशमं प्राप्तवान् धारणाङ्गम् ॥ १३ ॥

ब्रह्मेति ॥ ब्रह्मात्मनोरेकत्वानुभवं सुदृढं यथा भवति तथा अधिगतं चित्तं वासनामात्रकारणात् यत्र प्रयाति तत्र विषयेऽपि विमलब्रह्मदर्शनं प्रभवति। तद्वत् अप्रयत्नात् स्वानुभवे मनसो धारण च प्रभवति। एवंभूतं धारणाख्यं त्रयोदशतममङ्गं प्राप्तवान् पुरुषः नित्यानन्दात्मयोगी सहजयोगीति भावः।

[धारणस्य श्रौत लक्षणम्]

अत्र श्रुतिः —

"यत्र यत्र मनो याति ब्रह्मणः तत्र दर्शनात्।
मनसो धारणं चैव धारणा सा परा मता॥"[2]

इति ॥

---

1. शब्दादिविषयेषु मनसः आत्मतां तादात्म्यं विवेकेन दृष्ट्वा यत् चित्तरञ्जनं विषयसुखप्रदानेन आत्यन्तिकविषयसुखाप्रदानेन च स्यात् स एव प्रत्याहार इति विज्ञेयः। एषः सद्योमुमुक्षुभिः मुहुर्मुहुरभ्यसनीयः। विषयव्यापारविमुखीकरणार्थत्वात् प्रत्याहारस्येति ॥ (भा) विषयसामान्ये ब्रह्मदृष्टिः प्रत्याहारः (उ) स्वविषयासम्प्रयोगे चित्तस्यस्वरूपानुकार इव इन्द्रियाणां प्रत्याहार इति योगसूत्रम् (2-54).

2. यत्र यत्र विषयेषु स्वाभाव्येन मनो याति, श्रोत्रेन्द्रियद्वारेण शब्दं, त्वगिन्द्रियद्वारेण स्पर्शमित्येवं सर्वत्र गच्छति, तत्र तत्र विषयेषु सच्चिदानन्दलक्षणस्य ब्रह्मणः दर्शनात् मनसः धारणं विषयेभ्यो व्यावृत्त्य ब्रह्मणि यदवधारणं, सैव धारणेति मतम्। स्वस्वगोळकावधारणं तु यद्यपि धारणा स्यात्, तथापि सा न परा स्यात्। अस्याः उक्तलक्षणायाः एव सर्वोत्कृष्टत्वात्। (भा) मनः प्रचाराधिकरणं ब्रह्मेत्यर्थः। (उ) 'नाभिचक्रे हृदयपुण्डरीके मूर्ध्निज्योतिषि, नासिकाग्रे जिह्वाग्रे इत्येवमादिषु देशेषु बाह्ये वा विषये चित्तस्य वृत्तिमात्रेण बन्धः धारणा' इति योगभाष्यम् (3-1) अत्र—विष्णुपुराणवचनमेवं वर्तते— "प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम्। वशीकृत्य ततः कुर्यात् चित्तस्थानं शुभाश्रये। मूर्तं भगवतो रूपं सर्वोपाश्रयनिस्पृहम्। एषा वै धारणा ज्ञेया यच्चित्तं तत्र धार्यते। तच्च मूर्तं हरे रूपं यद्विचिन्त्यं नराधिप। तच्छ्रूयतामनाधारा धारणा नोपपद्यते।" इत्यादि ॥ (6-7-45, 77, 78).

[ध्यानस्वरूपविवरणम्]

तर्हि चतुर्दशाङ्गयोगी कः ? इत्यत्रोच्यते —

देहाद्यालम्बनं यत् प्रविततमभवत् सन्ततं प्रागहन्त्वं
तद् ब्रह्म ह्यद्वितीयं नयति नियमिताभ्यासयोगेन धीरः ।
ब्रह्माकारात्मवृत्तावपि भवति जडालम्बनं किञ्चिदस्मिन्
नित्यानन्दे रसे नो चतुरधिकदशध्यानयोगी महात्मा ॥ १४ ॥

देहेति ॥ तत् अहन्त्वं कर्मभूतं नियमिताभ्यासयोगेन नियमेनाभ्यस्तनिदिध्यासनयोगेन ब्रह्म नयति । अथ जीवन्मुक्तिवशात् ब्रह्माकारवृत्तौ प्राप्तायामपि किंचित् जडालम्बनं तदहन्त्वं भवति पश्चात् विदेहमुक्तिसिद्धे अस्मिन् नित्यानन्दरसे तु किञ्चिदपि तन्नो । अयं चतुर्दशाङ्गवान् ध्यानयोगी महात्मा ॥

[श्रौतं ध्यानलक्षणम्]

अत्र श्रुतिः —

"ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः ।
ध्यानशब्देन विख्याता परमानन्ददायिनी ॥" इति ॥[1]

[सर्ववृत्तिविस्मरणात्मकसमाधिस्वरूपविवरणम्]

तर्हि पञ्चदशाङ्गयोगी कः ? इत्यपेक्षायामुच्यते—

वृत्तीनां विस्मृतिर्या प्रकृतिविकृतिजाशेषमोहास्पदानां
चित्तप्राणाद्यरूपाप्ययसुखजननी सर्वतत्त्वैरपेता ।
विद्याशक्तिस्वरूपा जयति सुखमयी ब्रह्मविच्छ्रेष्ठलभ्या
सेयं यत्रास्ति पञ्चाधिकदशचरमाङ्गे समाधौ समाप्तम् ॥ १५ ॥

वृत्तीनामिति ॥ प्रकृतिविकृतिजाशेषमोहास्पदानां प्रकृतिः अविद्या विकृतिः तत्कार्यभूतः प्रपञ्चः ताभ्यामुत्पन्नसमस्तमोहनिलयानां वृत्तीनां विस्मृतिः यत्र समाधौ अस्ति तत्र योगशास्त्रं समाप्तम् ।

---

1. सच्चिदानन्दलक्षणं ब्रह्मैवास्मीति सद्वृत्त्या अखण्डाकारवृत्त्या निर्गतः आलम्बो तस्य भावः तत्ता, तया या स्थितिः परमानन्ददायिनी सा स्थितिः ध्यानशब्देन विख्याता प्रसिद्धा भवति । न तु ध्यानं नाम प्रकृते सजातीयप्रत्ययप्रवाहरूपम् । तस्य नियमरूपत्वस्य अभिहितत्वात् । (भा) निरालम्बनब्रह्मभावनं ध्यानम् (उ) 'तत्र प्रत्ययैकतानता ध्यान'मिति योगसूत्रम् (3-2) 'तद्रूपप्रत्ययैकाग्र्यसन्ततिश्चान्यनिःस्पृहा । तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप ॥' इति विष्णुपुराणम् । (6-7-89)

[श्रौतं समाधिस्वरूपम्]

अत्र श्रुतिः —

"निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ।
वृत्तिविस्मरणं सम्यक् समाधिरभिधीयते ॥"[1] इति ॥

[समाधिलक्षणस्य सुषुप्तौ अतिव्याप्तिशङ्का]

ननु समाधावेव वृत्तिविस्मरणमिति न नियमोऽस्ति । सुषुप्तावपि सर्वेषां वृत्तिविस्मरणदर्शनात् ।

"सुषुप्तिकाले सकले विलीने
तमोऽभिभूतः सुखरूपमेति ॥"[2]

इत्याद्यनन्तश्रुतिभिः सुषुप्तौ सर्वविकारलयसुखाविर्भावयोः प्रतिपाद्यमानत्वात्, चित्ताद्यरूपनाशसुखजनकत्वं प्रकृतचरमाङ्गभूतसमाधिव्यतिरिक्तसुषुप्तेरप्युपपद्यते इति ।

[सकलनिष्कलत्वाभ्यां भेदोपपादनेन तत्परिहारः]

अत्रोच्यते— न हि सुषुप्तौ कस्यापि चित्ताद्यरूपनाशः निष्कलसुखाविर्भावो वा भवितुमर्हतः तमोऽभिभूतत्वश्रवणेन तात्कालिकवृत्तिमात्रलोपसंभवात्[3]। सकलानन्दसंभवाच्च ।

[सुषुप्तौ निष्कलब्रह्मत्वोक्तेः गौणत्वम्]

श्रुत्यन्तराणि तु बहूनि सुषुप्तस्य परब्रह्मत्वनिष्कलानन्दत्वादिलक्षणापादकानि श्रूयमाणान्यपि तुरीयतत्त्वप्रतिष्ठापनपर माण्डूक्याद्यनेकश्रुत्यविरोधेन सर्वश्रुति समन्वयकारणौचित्यात् गौणानि मन्तव्यानि ।

[सुषुप्तौ जीवस्य शरीरोत्थानाद्युपपादनम्]

"एष सम्प्रसादः अस्माच्छरीरात् समुत्थाय
परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते ।"[4]

इति श्रुतेः,

---

1. निर्विकारैव निर्विकारता । ब्रह्माकारैव ब्रह्माकारता । तया वृत्त्या पुनरुत्पद्यमानानां सङ्कल्पादिवृत्तीनां सम्यक् विस्मरणं समाधिरित्यर्थः । अतः ध्यान समाध्योः अखण्डाकारवृत्तिरूपत्वाविशेषेऽपि वृत्तीनां पुनरुत्पत्त्यनु त्पत्तिरूपविशेषदर्शनात् न अभेदशङ्का ॥ (भा) अखण्डाकारवृत्तिः सविकल्पः, तद्वृत्त्यस्मरणं निर्विकल्पसमाधिरित्यर्थः ॥ (उ) 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' इति योगसूत्रम् (3-3) "तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् । मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते ।" इति विष्णुपुराणवचनम् । (6-7-90)

2. कैवल्योपनिषत् 1.13.

3. अत्र— 'सुषुप्तिसमाध्योः मनोलयाविशेषेऽपि महदस्त्युभयोर्भेदः, तमसि लीनत्वात् मुक्तिहेतुत्वाभावाच्च । समाधौ मृदिततमोविकारस्य तदाकाराकारिताखण्डाकारवृत्त्यात्मकसाक्षिचैतन्ये प्रपञ्चलयः सम्पद्यते । प्रपञ्चस्य मनःकल्पितत्वात्' इति मण्डलब्राह्मणोपनिषद्व्याख्यानुसन्धेया (2-3-4)

4. 'अशरीरो वायुरभ्रं विद्युत् स्तनयित्नु शरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते एवमेव' इति एतद्वाक्यपूर्वभागः । (छां. 8-12-2)

"सम्पद्याविर्भावः स्वेन शब्दात् ।"[1]

इति सूत्राच, संप्रसादशब्दोदितस्य सुषुप्तस्य जीवस्य शरीरोत्थानपूर्वकपरंज्योतिस्सम्पत्त्यवगमात् सुषुप्तौ निष्कलब्रह्मत्वावधारणं सतां सुतरामपहासार्हं स्यात् ।

## [वचनेषु सामान्यविशेषभावव्यवस्थावश्यकता]

सुषुप्तब्रह्मवादी तु—

"इमाः सर्वाः प्रजाः अहरहः ब्रह्म गच्छन्त्यः "[2]

इत्यादिछान्दोग्यश्रुत्यविरोधेन सर्वेषां वेदान्तानां सुषुप्ते समन्वयमकार्षीत । तेन विशेषवचनानां सामान्यवचनैः बाधः निरङ्कुशः समजनि । सामान्यवचनानां तु सुषुप्तब्रह्मपराणां विशेषवचनैः तुर्यब्रह्मपरैः बाधः उपपद्यत इति सर्वेषामभिमतम् ।

## [सुषुप्त्यपेक्षया समाधेर्भेदोपपादनम्]

तर्हि सुषुप्तौ स्थूलसूक्ष्मविकाराभावेऽपि बीजविकारसद्भावात् निर्विशेषत्वाभाव इव प्रकृत निर्विकल्पसमाधावपि —

"वृत्तयस्तु तदानीमप्यज्ञाता आत्मगोचराः ।
स्मरणादनुमीयन्ते व्युत्थितस्य समुत्थिताः ॥"[3]

इति श्रुत्या वृत्तिसद्भावावगमात् वृत्तिविस्मरणवचनं अनुपपन्नमिति चेत् — अत्रोच्यते — न हि निर्विकल्पसमाधिः प्रकृतः, ब्रह्मविच्छ्रेष्ठलभ्यत्वेन षष्ठस्य निर्वासनाख्यस्य

---

1. अयं जीव एवं सम्पद्य, देवलोकाद्युपभोगस्थानेष्विव आगन्तुकेन केनचिद्विशेषेणाभिनिष्पद्यते उतात्ममात्रेणेति संशये, अयं केवलेनैवात्मना आविर्भवति न धर्मान्तरेणेत्युक्तम् । स्वेनेति श्रुतौ स्वशब्दोक्तेरिति तत्र हेतुः । (ब्र.सू. 4-4.1)

2. इदं च पूर्णं वाक्यम् — अथ ये चास्येह जीवाः ये च प्रेताः यच्चान्यदिच्छन् लभते सर्वं तदत्र गत्वा विन्दते अत्र ह्यस्यैते सत्याः कामाः अनृतापिधानाः तद्यथा हिरण्यनिधिं निहितं अक्षेत्रज्ञाः उपर्युपरि सञ्चरन्तो न विन्दते एवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्यः एतं ब्रह्मलोकं न विन्दन्ति, अनृतेन हि प्रत्यूढाः" इति (छां. 8-3-2).

3. अध्यात्मोपनिषत् 36.

समाधेरेव प्रकृतत्वात् । तृतीयो हि निर्विकल्पाख्यः समाधिः ब्रह्मविल्लभ्यः प्रसिद्धः । तत्रापि प्रारब्धबीजसद्भावेऽपि सञ्चितागामिबीजाभावात् सुषुप्तिवैलक्षण्यं अवगन्तव्यम् ॥[1]

इति श्रीमदप्पयदीक्षितेन्द्रान्वयजेन अप्पयदीक्षिताचार्येण
विरचितेषु पञ्चदशाङ्गयोगप्रकरणं[2]
समाप्तम् ॥

---

1. एतद्ग्रन्थमूलभूततेजोबिन्दूपनिषदि इमं पञ्चदशाङ्गयोगमुपपाद्य, एवं उपसंहारः कृतः, यथा—

"इदं चाकृत्रिमानन्दं तावत् साधु समभ्यसेत् ।
लक्ष्ये यावत् क्षणात् पुंसः प्रत्यक्त्वं सम्भवेत् स्वयम् ॥
ततः साधननिर्मुक्तः सिद्धो भवति योगिराट् ।
समाधौ क्रियमाणे तु विघ्नान्यायान्ति वै बलात् ॥
अनुसन्धानराहित्यं आलस्यं भोगलालसम् ।
लयस्तमश्च विक्षेपः तेजः स्वेदश्च शून्यता ॥
एवं हि विघ्नबाहुल्यं त्याज्यं ब्रह्मविशारदैः ।
कुशलाः ब्रह्मवार्तायां वृत्तिहीनाः सुरागिणः ॥
ते ह्यज्ञानतया नूनं पुनरायान्ति यान्ति च ।
ये तु वृत्तिं विजानन्ति ज्ञात्वा वै वर्धयन्ति ते ॥
निमिषार्धं न तिष्ठन्ति वृत्तिं ब्रह्ममयीं विना ॥
विद्वानेवं सुखे तिष्ठेत् धिया चिद्रसपूर्णया ॥"

इत्यादि ॥

2. भगवत्पादशङ्कराचार्यैरपि स्वविरचितायां अपरोक्षानुभूतौ सविस्तरं पञ्चदशाङ्गयोग एवोपपादितः । अधिकं तु अस्मदीयप्रस्तावनायां द्रष्टव्यमिति शम् ॥

# मूलश्लोकानुक्रमणी

# उद्धृतप्रमाणानुक्रमणिका



* सूचना : एवं किञ्चिदन्तर्निवेशितानि प्रस्तावनाटिप्पण्योरुद्धृतानि प्रमाणानि।

---

# उद्धृताः ग्रन्थाः

| ग्रन्थनाम | सङ्केतः | ग्रन्थनाम | सङ्केतः |
|---|---|---|---|
| अद्वयतारकोपनिषत् | अद्व | बृहदारण्यकोपनिषत् | बृ |
| अध्यात्मोपनिषत् | अध्या | ब्रह्मसूत्रम् | ब्र.सू. |
| अन्नपूर्णोपनिषत् | अन्न | भगवद्गीता | गीता |
| अपरोक्षानुभूतिः | अप | मण्डलब्राह्मणोपनिषत् | मण्ड |
| अमृतनादोपनिषत् | अमृ-ना | महानारायणोपनिषत् | महा |
| अमृतबिन्दूपनिषत् | अमृ-बि | महोपनिषत् | महो |
| अवधूतोपनिषत् | अव | मुक्तिकोपनिषत् | मुक्ति |
| कुमारसम्भवः | कुमा | मुण्डकोपनिषत् | मुण्ड |
| केनोपनिषत् | केनो | योगचूडामण्युपनिषत् | यो-चू |
| कैवल्योपनिषत् | कैव | योगभाष्यं (वाचस्पत्यम्) | यो-भा |
| छान्दोग्योपनिषत् | छां | योगशिखोपनिषत् | यो-शि |
| ज्ञानसङ्कलिनीतन्त्रम् | ज्ञान | योगसूत्रं (पातञ्जलम्) | योग |
| तेजोबिन्दूपनिषत् | तेजो | विवेकचूडामणिः | विवे |
| त्रिपुरातापिन्युपनिषत् | त्रिपु | विष्णुपुराणम् | विष्णु |
| त्रिशिखिब्राह्मणोपनिषत् | त्रिशि | श्वेताश्वतरोपनिषत् | श्वेता |
| दर्शनोपनिषत् | दर्श | सदाचारस्तोत्रम् | सदा |
| ध्यानबिन्दूपनिषत् | ध्यान | सनत्कुमारसंहिता | सन |
| नारदपरिव्राजकोपनिषत् | नार | सर्वसारोपनिषत् | सर्व |
| पञ्चदशाङ्गयोगप्रकरणम् | पञ्च | | |



WO 7035—MUPM—1,000 copies—21-7-70

